

# ब्रह्मयज्ञः


साधु फङ्गानाथ

सम्पादितः

मु० भास्करक्षेत्र ( भटवाड़ी )

डा० उत्तरकाशी

जि० टेहरी, गढ़वाल





प्रकाशक

सेठ जयनारायणजी हिन्दूमल दानी

११२ वालकेश्वर रोड बम्बई नं० ६

सम्वत् १९९२.

॥ ॐ ॥

"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥"

( गीता )

ॐ

# भूमिका

यज्ञान्नाकं गता देवा यज्ञेनैवासुरा हताः। यज्ञो हि कल्मषं हन्ति यज्ञे सर्वं प्रतिष्ठितम् ॥ यज्ञो वै विष्णुरूपो हि विष्णुर्ब्रह्म सनातनम्। तस्मादुत्पद्यते विश्वं लीयते च पुनः पुनः ॥ २ ॥ शरीरे बन्धनं प्राप्य पितृभिः सह सज्जते। शरीरास्थां परित्यज्य त्रीनृणान्सह मुच्यते ॥ ३ ॥ शरीरं जरया ग्रस्तं मृत्युनापि दृढं धृतम्। न शक्नोति पिता त्रातुं मृणं वास्य व्यपायितुम् ॥ ४ ॥ अप्राप्ते यौवने पुत्रो म्रियते चेदनामयः। ऋणं मोचयितुं तस्य न पिता तमनु व्रजेत् ॥ ५ ॥ ऋणमोचनकर्तारो बहवो भुवि सन्ति वै। आत्मनश्च परित्राता कदाचित्कोऽपि दृश्यते ॥ ६ ॥ वैराग्यं जायते पुंसां शास्त्रसज्जनसंगमैः। पुण्यपुंजप्रभावेण पूर्वजन्मकृतोद्यमैः ॥ ७ ॥ ईदृशाः पुरुषा धन्या ये भोगै नं विमोहिताः। प्रथमे वयसि त्यक्त्वा विरज्यन्ते विचारतः ॥ ८ ॥ वैराग्यपावके सर्वं विषयं विषदारुणम्।। विदह्य बाह्यसम्बन्धं देहमात्रमवशिष्यते ॥ तद्देहं निर्दोषं पुण्यं गुरवे आहिताग्नये। स्वाहा दत्वेति कर्तव्यं कुर्याज्जीवो हितेच्छया ॥ १० ॥ यज्ञेन पूतपापः सन्शमादिगुणसंयुतः। संन्यस्य श्रवणं कुर्याच्छ्रोत्रियगुरुसन्निधौ ॥ ११ ॥ ब्रह्मनिष्ठगुरुः प्राप्य शिष्यं सर्वं गुणान्वितम्। अध्यापयेच्छुभां विद्यां कृपया नार्थ सिद्धये ॥ सहि नृणां परो यज्ञः सद्गुरुपादसेवनम् उपदेशेन कल्पितः कर्तव्यो मोक्षकाङ्क्षिभिः ॥ १३ ॥ चित्तविश्रान्तये पश्चात्समाधिः कर्तव्यो बुधैः। ब्रह्मात्मानं सुविज्ञाय ब्रह्मयज्ञः समाप्यते ॥ १४ ॥

॥ ॐ तत्सत् ॥




ॐ

# ब्रह्मयज्ञ



## प्रथमाहुतिः

### श्रीगुरुपुष्पाञ्जलिः

अद्वैताय ह्यखण्डाय देशिकाय परात्मने ।
अखण्डानन्दबोधाय तस्मै श्रीगुरवे नमः ॥ १ ॥

श्रोत्रियाय महेशाय हरये ब्रह्मरूपिणे ।
वेदान्तवेद्यतत्त्वाय तस्मै श्रीगुरवे नमः ॥ २ ॥

ईश्वरमूर्तिरूपाय करुणामूर्तिधारिणे ।
पतितोद्धारकामाय तस्मै श्रीगुरवे नमः ॥ ३ ॥

अहैतुकीकृपामूर्त्यै संसारमलनाशिने ।
निर्मलाय निर्लेपाय तस्मै श्रीगुरवे नमः ॥ ४ ॥

शिष्याणां ज्ञानदानाय लीलया देहधारिणे ।
सदेहेऽपि विदेहाय तस्मै श्रीगुरवे नमः ॥ ५ ॥

गम्भीराय प्रशान्ताय सदा समरसाय वै ।
सौम्याय शान्तरूपाय तस्मै श्रीगुरवे नमः ॥ ६ ॥

अक्षोभाय विशोकाय भवभीतिनिवारिणे ।
सर्वापदविहीनाय तस्मै श्रीगुरवे नमः ॥ ७ ॥
पापिनां भयदात्रे च साधूनां हितकाङ्क्षिणे ।
सत्याय मितवाके च तस्मै श्रीगुरवे नमः ॥ ८ ॥
विशदाय विशालाय चिद्घनाय चिदात्मने ।
आनन्दपूर्णरूपाय तस्मै श्रीगुरवे नमः ॥ ९ ॥
परदुःखप्रशान्ताय शिष्यसन्तापहारिणे ।
कटाक्षेण सुस्निग्धेन तस्मै श्रीगुरवे नमः ॥१०॥
गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
सद्-गुरुर्दुर्लभः कश्चिच्छिष्यसन्तापनाशकः ॥११॥
गुरुं हित्वा परं तत्त्वं शास्त्रेभ्यो ज्ञायते कथम् ।
रविवच्छास्त्रवारीणि गुरुरुत्थातुमर्हति ॥१२॥
कुशलो रविरुत्थाय समुद्राल्लवणं जलम् ।
ददाति वृष्टिरूपेण पानाय निर्मलं यथा ॥१३॥
तथाहि शास्त्रसंभारमालोड्य ग्रन्थविस्तरम् ।
ददाति शिष्यलाभाय परमपावनीं कथाम् ॥१४॥
गुरुशास्त्रविहीनानां ज्ञानं शतयुगैर्नच ।
शास्त्रज्ञानं गुरुं हित्वा भ्रान्तये नच मुक्तये ॥१५॥
शास्त्रारण्यं तमोग्रस्तं चित्तविभ्रान्तिकारणम् ।
गुरुप्रसादतः साध्यं रम्यं विनोदहेतुकम् ॥१६॥

"न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमनुप्रमाणात्"

शास्त्रज्ञानाद् गुरुं हित्वा यो मूढो मोक्षमिच्छति ।
निखातं कूपमुज्झित्य मरौ सलिलमिच्छति ॥१८॥

बुद्ध्या लब्धं न वै ज्ञानं निर्दोषमिह लभ्यते ।
शास्त्रैकसाधनं यस्य बुद्ध्या तत्केन लभ्यते ॥१९॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥२०॥

आत्मा हि स्वगुरुः साक्षाद्बहिर्मूर्तिंधरो बुधः ।
मूर्तिं त्यक्त्वा स वै पुंसः स्वात्मनि खलु राजते ॥२१॥

अज्ञानेन बहिर्मूर्तिर्भासते ज्ञानगोचरी ।
आत्मनो नैव मूर्तिः स्याद् गुरोरपि तथैव न ॥२२॥

आभासेन सति शुद्धे यद्रूपं भाति वै बलात् ।
तद्धि मायामयं विद्धि गन्धर्वनगरो यथा ॥२३॥

आभासो विद्यते यावत्तावद्देहात्मना स्थितिः ।
गुरुशिष्यसम्बन्धोऽपि देहबुद्ध्या विकल्प्यते ॥२४॥

यावज्जीवं त्रयोवन्द्या वेदान्त गुरुरीश्वराः ।
आदौ विद्याप्रसिद्ध्यर्थमन्ते विघ्ननिवृत्तये ॥२५॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्य हि सफला याति ब्रह्मविद्या सनातनी ॥२६॥

श्रद्धाहीनाय न वाच्यमयताय दुरात्मने ।
उक्तेऽपि विफला ह्येषा स्यादूषरे यथा कृषिः ॥२७॥

गुरुशुश्रूषया पापं नश्यति यो महामतिः ।
तस्मै प्रकाश्यते विद्या गाढतिमिरनाशिनी ॥२८॥

इत्येषा वाङ्मयी पूजा श्रीगुरुपादपंकजे ।
सभक्त्या दीयते प्रेम्णा प्रसीद परमेश्वर ॥२९॥

इति ब्रह्मयज्ञे प्रथमाहुतिः—ॐ भूः स्वाहा ॥ १ ॥

---

# द्वितीयाहुतिः

## वैराग्यम्

मोक्षेच्छा यदि ते वत्स विषयान्दूरतस्त्यज ।
शमो दमस्तपः श्रद्धा सत्यं पीयूषवद्भज ॥ १ ॥

शास्त्रदृष्ट्या पदार्थेषु दुःखदोषं पुनः पुनः ।
विविच्य स्वानुभूत्या तु जिहासा कर्त्तव्या बुधैः ॥ २ ॥

दोषदृष्टिं विना को न विषयान्हातुमर्हति ।
निर्दोषदोषदर्शी तु शास्त्रादन्यो न विद्यते ॥ ३ ॥

जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना ।
आच्छाद्य ज्ञानविज्ञानं मोहयति जगत्त्रयम् ॥ ४ ॥

अविवेकेन यद्रम्यं भाति विश्वं चराचरम् ।
विचारिते विवेकेन निःसारं खलु दृश्यते ॥ ५ ॥

अहो महाग्रहो मोहो येन कवलितो नरः ।
काष्ठबुद्ध्या यमाश्रित्य भवाब्धि तर्तुमिच्छति ॥ ६ ॥

शरीरपोषणार्थी यः स्वात्मानं द्रष्टुमिच्छति ।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स गच्छति ॥ ७ ॥

अशुचौ या शुचि बुद्धिरनित्ये नित्यता तथा ।
दुःखेऽनात्मपदार्थे च मन्दबुद्धिर्विपर्ययः ॥ ८ ॥

मलमूत्रसमाकीर्णे दुर्गन्धिस्वेदनिःसृते ।
देहे चेत्प्रीतिमान्मूढ भवतु नरकेषु च ॥ ९ ॥
अशुचिस्थान-संस्पर्शान्मन्यसे चेत्सुखं हृदि ।
नरकादपि ते मूढभवतु सुखमुत्तमम् ॥१०॥
यौवनं जीवितं वित्तमनित्यं चंचलं चलम् ।
तेषु या नित्यता बुद्धिः सैव मोहः प्रकीर्तितः ॥११॥
दुःखं स्वर्गात्प्रपाते तु बहुविधं यमालये ।
गर्भवासे महद्दुःखं सर्वं दुःखं विवेकिनः ॥१२॥
दुःखे सुखं सुनिश्चित्य स्वर्गादिकर्मतत्पराः ।
संसारावर्त्तमार्गेषु घूर्णन्ति रथचक्रवत् ॥१३॥
देहेन्द्रियमनोबुद्धौ ह्यात्मबुद्ध्या विचेष्टते ।
अहो नरो महामोहात्सदैव विप्रलभ्यते ॥१४॥
त्यज रे मोहबन्धनं भज रे साधुसंगमम् ।
शास्त्रसज्जनसंसर्गैस्त्यजरे मोहजाड्यताम् ॥१५॥
श्रितस्त्वं चन्दनं भ्रान्त्या दुर्विपाकं विषद्रुमम् ।
अयिमुग्ध न जानासि मरिष्यसि विषेण वै ॥१६॥
विषं विषयवैषम्यं न विषं विषमुच्यते ।
एकजन्महरं विषं विषयो बहुजन्महा ॥१७॥
बहुजन्मकृतैः पुण्यैर्वैराग्यं खलु जायते ।
वैराग्येण विना ज्ञानं कदापि नोपजायते ॥१८॥

ज्ञानं विना न मुक्तिः स्याज्ज्ञानं वै मोक्षकारणम् ।
आनन्दप्राप्तये मुक्तिर्दुःखदोषविनाशिनी ॥१९॥

विषयेण चलं चित्तं न तिष्ठति क्षणं स्थिरम् ।
चंचले व्यथिते शान्तिः कदापि न स्थिता भवेत् ॥२०॥

सुखं वै प्राणिनां प्रेयः सुखाय विषयाः प्रियाः ।
न वैराग्यं विनानन्दो विषया दुःखदाः खलु ॥२१॥

भोगेन चंचलं चित्तं वैराग्येण निगृह्यते ।
वैराग्यात्परमा शान्तिः समाधावनुभूयते ॥२२

दोषदृष्टिं विना तन्न जायते प्राकृते जने ।
मोहनाशे विचारो हि भवति परमौषधम् ॥२३॥

वारविलासिनी नारी मोहिनी तावती स्थिता ।
यावन्न ज्ञायते तस्या गुह्यरोगाः सुदुस्तराः ॥२४॥

दोषदृष्टिर्जिहासा च मोहदृष्टिर्विघातिनी ।
तद्बलान्मोहमाहत्य निर्भयं पदमाश्रयेत् ॥२५॥

मृगतृष्णा जलं भ्रान्त्वा यथा मृगः प्रधावति ।
संसारेऽपि सुखं बुद्ध्वा मूढस्तत्प्राप्तुमिच्छति ॥२६॥

भोगेषु कृपणो भूत्वा स्वस्वार्थं योहि नश्यति ।
ततोऽधिको मूढो लोके नालोक्यते विवेचकैः ॥२७॥

सम्पदि सुखाशा नास्ति वियोगे दारुणा व्यथा ।
प्राप्ते रागादप्राप्तौ च चित्तं ज्वलति तृष्णया ॥२८॥

अर्थानामर्जने क्लेशः प्राप्तौच गुणनाशकम् ।
वैराग्यं धर्मबुद्धिश्च नश्यत्यसौ सदा बलात् ॥२९॥
मधुरं भाषणं नृणां जिह्वाग्रे तावत्तिष्ठति ।
यावन्न धनसंप्राप्तं सर्वगुणापहारकम् ॥३०॥
अर्थानामर्जने दुःखं रक्षणे शान्तिनाशनम् ।
आये सव्यसनं चिन्तां व्यये चित्तविदारणम् ॥३१॥
लक्ष्मीः कान्तिः क्षणं न स्यात्स्थिरा कुत्र कदाचन
तयो र्न वशमागच्छेद्यदि मोक्षे प्रयोजनम् ॥३२॥
पुत्रादपि धनाढ्यानां भीतिः सर्वत्र दृश्यते ।
रात्रौ चौर-भयात्तेषां सुनिद्रा नोपजायते ॥३३॥
धनिनः प्रायशो मूढाः धर्मभ्रष्टा मदोन्नताः ।
दृश्यन्ते पापसंसक्ताः स्वार्थोद्विपथगामिनः ॥३४॥
अर्थेन बलवान् जीवस्तस्माद्भवति पण्डितः ।
अर्थनाशे विलोप्यन्ते सर्वे गुणा निशाब्जवत् ॥३५॥
शरीरात्प्राग्भवेद्भोज्यं मातृस्तने यथा पयः ।
तदर्थं बहुलायासं न कुर्याद् बुद्धिमान्नरः ॥३६॥
लाभे तृष्णा क्षये क्लेशो व्यये चित्तविदारणम् ।
सर्वदुःखकरं धिक्त्वं सर्वानर्थभयंकरम् ॥३७॥
धनं हि धनिनं हन्ति निर्धनस्तु सुखं वसेत् ।
धनं हन्ति तपः सत्यं धनान्नास्ति परो रिपुः ॥३८॥

कामिनीकांचने त्यक्त्वा मोक्षे आशां दृढीकुरु ।
भोगाशा रोधते मोक्षं वैराग्यादमलं सुखम् ॥३६॥

मांसास्थिस्नायुशालिन्याः स्त्रियाअंगंसुशोभनम् ।
मन्यन्ते कामुका अन्धा अविचारपरायणाः ॥४०॥

एकैकं खण्डशः कृत्वा करोति चेदवेक्षणम् ।
कस्मिन्नपि न मोहस्ते जायते जुगुप्सां विना ॥४१॥

अशुभेषुशुभेतिस्यादया दृष्टिर्मननं विना ।
समीचीना न सा बुद्धिर्मोहयति जगत्त्रयम् ॥४२॥

गन्धादिलेपनैर्नित्यं यदंगसौष्ठवं कृतम् ।
श्मशाने शकुनैर्भक्ष्यं तदेव किं न पश्यसि ॥४३॥

गजकुम्भनिभं स्तन्यं कविना यत्प्रकल्पितम् ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवांधसः ॥४४॥

प्रातरुत्थाय नारीणां मुखं जिघ्रति चेत्पुमान् ।
जानाति मुखस्रावस्य परिणामं पृथग्विधम् ॥४५॥

मदान्धा ललनासक्ता विमुग्धा नरदन्तिनः ।
प्रबोधं नाधिगच्छन्ति दृढैरपि शमांकुशैः ॥४६॥

केशकज्जलधारिण्यो दुस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥४७॥

दुष्कृताग्निः संयोगेन दहति तृणपल्लवम् ।
दूरादेव दहेन्नार्यो मृगचंचललोचना ॥४८॥

नारी

नरकस्य मुखं नार्यो दहन्ति कामुकं नरम् ।
दिवा विमुह्य मोहेन रात्रौ प्राणान्हरन्ति ताः ॥४९॥
विषवल्लीसमा नारी करपल्लवशालिनी ।
भ्रमराक्षी कोमलाङ्गी स्तनस्तवकधारिणी ॥५०॥
ददात्युन्मत्ततैवश्यं सकृदास्वाद्यते यदि ।
पुष्पकेशरगौराङ्गी नरनिधनतत्परा ॥५१॥
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहंगाना मङ्गबन्धनवागुराः ॥५२॥
ललनासक्तचित्तो हि वध्यंते मत्तदन्तिनः ।
रतिशृङ्खलया बद्धस्तिष्ठति चौरमूकवत् ॥५३॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भव ॥५४॥
भोगभूमेरभावात्तु कथमिच्छा प्रपूर्यते ।
आशा द्रव्यं विना तूर्णं क्षीयते नोपलम्भनात् ॥५५॥
इन्धनेन यथा वह्निर्वर्धते उत्तरोत्तरम् ।
भोगेन कामरूपाग्निर्वर्धते च तथा क्रमात् ॥५६॥
दुर्गन्धिमलिने योनौ यो रमते निरन्तरम् ।
विवेककारणं तस्य किमन्यत्कथयाम्यहम् ॥५७॥
परोक्षे प्राणहन्त्रीं तां प्रत्यक्षे प्रियवादिनीम् ।
विषकुम्भसमां नारीं विद्धि रौरवदायिनीम् ॥५८॥

स्त्रिया तनोति संसारः स्त्रीत्यागाज्जगतः क्षयः ।
पुष्टो देहो यथा भोगैस्त्यागाच्छुष्कः प्रजायते ॥५९॥

भोगैश्चेत्समता कोऽपि कदाचित्कर्तुमिच्छति ।
तस्य चेष्टा भवेद्व्यर्था इन्धनैरनलो यथा ॥६०॥

मानुषं जन्म संप्राप्य पशुपक्षिविलक्षणम् ।
स्त्रिया नयेद् वृथा यस्तु स्वार्थहा सहि निश्चितः ॥६१॥

न पुत्रेण न धर्मेण मोक्षलाभः कदाचन ।
पुत्रमुत्पाद्य किं मूढ जन्मने प्रतिपद्यसे ॥६२॥

यदर्थे तेऽर्जितं वित्तं पापेन सुकृतेन वा ।
न पुण्यपापभागांशं लभते सा तव प्रिया ॥६३॥

अर्थानामर्जने यावत् समर्थोऽसि दिवानिशम् ।
तावत्ते मोहनालापैः सन्तोषिणी तव प्रिया ॥६४॥

क्षीणे वित्ते कृशे देहे तस्या प्रीतिर्न दृश्यते ।
पुत्रानुगामिनी वृद्धे वयसि साहि वर्तते ॥६५॥

अर्थेन सह ते प्रीति रर्थेन चित्तरंजनम् ।
अर्थहीनस्य कान्ता न वचनैरपि तोषिणी ॥६६॥

घृतेन वर्धते वह्निर्भोगेन कामदीपनम् ।
उभयमिन्धनं त्यक्त्वा तयोर्ज्वाला प्रशाम्यति ॥६७॥

भोगवैराग्ययोर्द्वन्द्वोमिलनं नहि विद्यते ।
भोगमोक्षौ तथैवान्यौ नैव समं प्रजायते ॥६८॥

आधि व्याधि समाक्रान्तो जरामरणसंकुलः ।
देहः स्फुरति संसारे सोऽपि दुःखाय केवलम् ॥६९॥
क्षणेनानन्दमाप्नोति क्षणेन याति खिन्नताम् ।
आगमापायिना नित्यं विकारेण स्वधर्मिणा ॥७०॥
पृष्ठास्थिकाष्ठसंघट्टपरिसंकटकोटरम् ।
आंत्ररज्जुभिराबद्धमस्वस्थं देहपिञ्जरम् ॥७१॥
दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ।
रक्तमांसमयस्यास्य का निश्चितिः क्षणे क्षणे ॥७२॥
वृद्धिः क्षयो विपर्यासो जीवनं मरणं तथा ।
अपक्षयादियुक्तस्य देहस्य रम्यता कुतः ॥७३॥
भुक्त्वा पीत्वा चिरं कालं पीनतां प्राप्य सुश्रियम् ।
इच्छन्नपि न संस्थानं विनाशमनु धावति ॥७४॥
जराकाले जरामेति मृत्युकालेच मर्त्यताम् ।
अज्ञविदुषयोरत्र वैषम्यं नैव लक्ष्यते ॥७५॥
गर्भवासे महाक्लेशः कृमि कीटादि दंशितः ।
मातृजरायुषा तद्धः श्रुतिभिः परिगीयते ॥७६॥
विण्मूत्रे व्याप्तितो बद्धो दृढ़ संवेष्टनेन च ।
हस्तपदादि सम्बद्धो निम्नमुखः सदास्थितः ॥७७॥
नरकेच यावद्दुःखं गर्भवासे ततोऽधिकम् ।
योनिद्वारे च संप्राप्य पीड्यमानोऽपि जायते ॥७८॥

स्फोटकोन्मोचने दुःखं प्राणिनामसहं भवेत् ।
पुत्रजन्मगते मातुस्तया किं न भवत्यलम् ॥७९॥

मासेनाल्पेन सा मुग्धा विस्मरति न मृष्यति ।
अहो मायामयं विश्वं करोति सा रतिक्रियाम् ॥८०॥

अशक्तिरापदस्तृष्णा मूकता मूढबुद्धिता ।
गृध्नुता लोलता दैन्यं सर्वं बाल्ये प्रवर्तते ॥८१॥

रोषरोदनरौद्रासु दैन्यजर्जरितासु च ।
दशासु वन्धनं बाल्यं मालनं करिणामिव ॥८२॥

ग्रहरोगपिशाचादि भयेन परिपूरितम् ।
बालचित्तं सदाक्रान्तं चलति वायु वेगवत् ॥८३॥

जलवह्निपशुव्याघ्रजातभीत्या पदे पदे ।
यद्भयं शैशवे नृणां नापदि यौवनेऽपि च ॥८४॥

भयाहारपरं दीनं दृष्टाऽप्राप्याभिलाषि च ।
लोलबुद्धिर्वपुर्धत्ते वाल्यं दुःखाय केवलम् ॥८५॥

शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा ।
जनतो ज्येष्ठबालाच्च शैशवं भयसंकुलम् ॥८६॥

बाल्यं त्यक्त्वा पुमान्क्षिप्रं यौवने विशते यदा ।
स्वचित्तबिलसंस्थेन कामेन परिभूयते ॥८७॥

ये केचन समारम्भास्ते सर्वे खलु दुःखदाः ।
यौवने सन्निधिं यान्ति महोत्पाता इव क्षये ॥८८॥

कान्तावियोगजो वह्निः प्रलयानलसन्निभः ।
दहति यौवने चित्तं तरुर्दावाग्निना यथा ॥८९॥

सुविमलापि विस्तीर्णा संयतापि सुरक्षिता ।
मतिः कलुषतामेति प्रावृषीव तरङ्गिणी ॥९०॥

मानमोहान्मदोन्मत्तं यौवनं यो हि वाञ्छति ।
अचिरेण स दुर्बुद्धिः पश्चात्तापं करिष्यति ॥९१॥

ते हि सत्पुरुषा धन्यास्ते पूज्यास्ते महात्मनः ।
ये सुखेन समुत्तीर्णाः साधो यौवनसंकटात् ॥९२॥

जर्जरीकृतसर्वाङ्गी जरा जरठरूपिणी ।
विरूपतां नयत्याशु देहं च क्षणभंगुरम् ॥९३॥

कामिन्यो जरया जीर्णं पुरुषं जर्जरं कृशम् ।
पश्यन्ति शिथिलं गात्रं दीनं हीनं पराक्रमैः ॥९४॥

भृत्या दारा सुता श्चैव बान्धवा सुहृदादयः ।
हसत्युन्मत्तवैरस्यं नरं वार्द्धक्यकम्पितम् ॥९५॥

गलितं पलितं मुण्डं दन्तविहीनमेव च ।
सर्वे त्यजन्ति संसारे वार्द्धक्ये वृषभं यथा ॥९६॥

दृष्टिहीनाः श्रुतिहीनाः शक्तिहीना निरुद्यमाः ।
वार्द्धक्ये क्षीयते सर्वं तृष्णैका तरुणायते ॥९७॥

कर्तव्यं किं मयालब्धं परत्र किं भवष्यति ।
इति चिन्ताभयैश्चित्तं व्याकुलं तत्र जायते ॥९८॥

भोगेच्छा वर्धते तूर्णमुपभोक्तुं न शक्यते ।
इत्यजस्रं जरा चैषा चित्तं दहति वार्धके ॥९९॥

अवस्था त्रिविधाः पुंसः क्लेशदाः खलु निश्चिताः ।
एतासु दोषदृष्टिर्या सा वैराग्यप्रदायिनी ॥१००॥

अन्तर्देहगता धर्मा यथाकाले प्रकाशते ।
अहंकारमनुस्मृत्य वर्तन्ते स्वस्वकर्मसु ॥१०१॥

अहंकारवशादापदहंकारवशात्त्रयः ।
अहंकारवशादीहा तस्मादेव दुराधयः ॥१०२॥

पृथिव्यां सर्वदुःखानि विषमानि महान्ति च ।
अहंकारात्प्रजायन्ते मलेभ्यो मशका यथा ॥१०३॥

अहंकारवने शान्ते तृष्णा नवतडिल्लता ।
शान्तदीपशिखावृत्त्या क्वापि यात्यति सत्वरम् ॥१०४॥

कामादिकलुषाच्चित्तं चंचलं वायुवच्चलम् ।
नीयते कामभोगेषु सुव्यग्रं व्यर्थमेव हि ॥१०५॥

दूराद् दूरतरं याति न प्राप्नोति क्वचित्फलम् ।
तथापि धावति क्षिप्रं विचित्रं तस्य चेष्टितम् ॥१०६॥

तरङ्गः क्षीणतां याति शरदि शिशिरे तथा ।
विचयः
चित्तस्य तरङ्गः क्वचिन्न क्षीणोति स्वभावतः ॥१०७॥

चित्तं धावति कार्येषु विहगः स्वामिषेष्विव ।
क्षणेन विरतिं याति बालः क्रीडनकादिव ॥१०८॥

चित्ते चलति संसारस्तस्मिन्स्थिते जगत्त्रयम् ।
तस्मिन्क्षीणे जगत्क्षीणं तच्च यत्नेन शोधयेत् ॥१०९॥

दौर्भाग्यदायिनी तृष्णा दीना कृष्णेव राक्षसी ।
भिनत्ति हृदयं पुंसां मायामयी प्रवञ्चिनी ॥११०॥

अविचारदुराधर्षा तृष्णा नरविमोहिनी ।
न चाप्नोति फलं किञ्चित्तृष्णा जीर्णेव कामिनी ॥१११॥

आप्तुं यन्नैव शक्नोति तत्राप्येषा विजृम्भते ।
नृत्यत्येषानिरानन्दा तृष्णा जीर्णेव नर्तकी ॥११२॥

ददात्येषा परं जाड्यं ज्ञानालोकावरोधकम् ।
मोहनीहारमध्ये तु तृष्णा जलपूवर्षिणी ॥११३॥

तावन्मोहयति ह्येषा कदर्यं लोलचेतसम् ।
यावदेवानुसंधत्ते तृष्णां विषविषूचिकाम् ॥११४॥

तृष्णया वञ्चितो लोकः प्रायशो बोधवर्जितः ।
कदाचिन्मोहयत्येषा गंभीरं पण्डितं जनम् ॥११५॥

अतिबलवती तृष्णा दुःसाध्यं तु तृणायते ।
प्रवर्त्य कुहकी तत्र तं योजयति संकटे ॥११६॥

अज्ञानेन हतं बाल्यं यौवनं वनिताहतम् ।
प्रौढं च चिन्तया ग्रस्तं वार्धक्यं परितापतः ॥११७॥

स्वप्नवत्खलु ताः सर्वाः क्षणोत्पत्तिविनश्वरा ।
तासु यो रमते मूढस्तस्यास्था का भवेद्ध्रुवा ॥११८॥

अनित्यं यौवनं बाल्यं शरीरं द्रव्यसंचयाः ।
भावाद्भावान्तरं यान्ति तरङ्गाः सागरे यथा ॥११९॥

धनानि बान्धवा भृत्या मित्राणि विभवाश्च ये ।
विनाशभयभीतस्य सर्वं नीरसतां व्रजेत् ॥१२०॥

प्रत्युपकारलोभात्तु पिता पुत्रानिहेच्छति ।
वैवश्यं तं परित्यज्य स्वस्वार्थं सहि रक्षति ॥१२१॥

गुणवन्तं सुतं माता भोगदानैर्मुहुर्मुहुः ।
अभिनन्दति मूर्खेभ्यः सुतेभ्यो नापि भाषणैः ॥१२२॥

मातृस्नेहेऽपि वैषम्यं स्वार्थेन जायते यदा ।
निर्दोषं किं समालभ्यं प्रेम दारासुतेष्वपि ॥१२३॥

हीनवित्तं पिता पुत्रं त्यजति स्वार्थपीडितः ।
स्वराज्यधनलाभार्थं दृश्यन्ते पितृघातकाः ॥१२४॥

क्षणेन धनवान् लोके दरिद्रो जायते क्षणात् ।
क्षणेन जायते मानः क्षणेन च विनश्यति ॥१२५॥

क्षणेन सुन्दरं रूपं दुष्टरोगेण नश्यति ।
क्षणेन भूषणं सर्वमग्निना परिदह्यते ॥१२६॥

अति श्रमेण या विद्या ह्यधिगता शनैः शनैः ।
अनभ्यासात्पुनः सा तु शनैः शनै र्विलीयते ॥१२७॥

नियतशास्त्रपाठेन वाग्मित्वमधिकं भवेत् ।
उरःकण्ठादिशोधश्च नैतस्मादधिकं परम् ॥१२८॥

शब्दारण्यं तमोग्रस्तं चित्तविभ्रान्तिकारणम् ।
बहुशास्त्रं परित्यज्य स्तोकेनापि सुखी भवेत् ॥१२६॥

अशास्त्रीयं प्रपंचं तु शास्त्रीयेण निवारयेत् ।
पश्चात्तूभयमुज्झित्य स्वात्मनिष्ठापरो भवेत् ॥१३०॥

दासत्वं बहुदोषाय सर्वदास्यं परित्यजेत् ।
स्वातन्त्र्यं तेन नैवास्ति दुर्बलता प्रवर्धते ॥१३१॥

अन्यायकारिणां भीतिः सततं हृदये यथा ।
प्रभुभयं तथा भृत्ये सर्वदा परिदृश्यते ॥१३२॥

दास्यं न कार्यमन्नाय शाकैर्वा जीवितं चरेत् ।
दासस्य कृतधर्मादि बन्धनाय न मुक्तये ॥१३३॥

एवं विचार्य मेधावी पार्थिवं भोगसंचयम् ।
स्वर्गभोगश्च शास्त्रेण विचारयेद्यथा विधि ॥१३४॥

उत्तमेन च पुण्येन प्राप्यते उत्तमा गतिः ।
मध्यमेन भवेन्मध्या कनिष्ठेनाधमा गतिम् ॥१३५॥

परोत्कर्षासहिष्णुत्वं स्पर्धा चैव समैः सह ।
कनिष्ठेषु प्रधर्षश्च यावदायुः प्रवर्तते ॥१३६॥

रागद्वेषभयोद्वेगकामक्रोधादिमानसाः ।
धर्मा देवादिदेहेषु हर्षामर्षभयंकराः ॥१३७॥

"भीषाऽस्माद्वायुः पवते भीषा यमः प्रधावति ।
मुक्तेश्च बिभ्यतो देवा मोहेनापि दधुः नराः ॥१३८॥

अज्ञानजेन मोहेन तथा प्रशासितुरीश्वरात् ।
उपभोगविहीनाच्च भाविपतनसंभवात् ॥१३९॥

स्वीयपुत्रकलत्रादि वियोगपतनादपि ।
दुःखमेव भवेत्तेषां यथा मर्त्यनिवासिनाम् ॥१४०॥

तपो बलाधिकेभ्यश्च कलत्रवित्तपोषणात् ।
पुराणे वर्णितं सर्वमिन्द्रादीनां विशेषतः ॥१४१॥

बन्धूनां पतनं दृष्ट्वा दासानाञ्चोर्ध्ववर्तनम् ।
अनन्तशोकमोहेन दह्यन्ते स्वर्गवासिनः ॥१४२॥

इन्द्रलोके महद्दुःखं प्राजापत्ये तथैव च ।
विष्णुलोके च रौद्रे च दुःखमेव विचारतः ॥१४३॥

ऐहिकामुष्मिके भोगे दुःखदोषाणि यानि च ।
तत्सर्वमुक्तमेतेन श्रुतिस्मृतिवचः शृणु ॥१४४॥

श्रुतिः—

श्वो भावा मर्त्यस्य यदन्तकैतत
सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव
तवैव वाहास्तव नृत्यगीते ॥ १ ॥
न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।

जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ॥ २ ॥
अजीर्यताममृतानमुपेत्य
जीर्य्यन्मर्त्यः क्वधस्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदान-
तिदीर्घे जीविते को रमेत ॥ ३ ॥

( कठोपनिषदि )

परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो ।
निर्वेदमायान्नास्त्यकृतः कृतेन ॥
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ।
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥

( मुण्डकोपनिषदि )

येनाहं नामृता स्यां किमहं तेन कुर्यां, यदेव भगवन् वेत्थ तदेव मे ब्रूहि ।

( बृहदारण्यके )

किमर्थं वयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोकः । ये प्रजमीशिरे ते श्मशानानि भेजिरे ये प्रजां नेशिरे तेऽमृतत्वं हि भेजिरे ।

( बृहदारण्यके )

स्मृतिश्च

ब्रह्मविज्ञानलाभाय परंहंससमाह्वयः ।

शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥

( महाभा० )

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।

( गीता )

इति साधुप्रज्ञानाथसम्पादित-ब्रह्मयज्ञे द्वितीयाहुतिः

"ॐ भुवः स्वाहा" ॥ २ ॥

# तृतीयाहुतिः

## उपदेशः

संसारं दुःखदं दृष्ट्वा जन्म मृत्युं पुनः पुनः ।
बहुजन्मार्जितैः पुण्यैर्वैराग्यं जायते नृणाम् ॥ १ ॥
मन्दमध्यादिभेदेन वैराग्यं भिद्यते यथा ।
अधिकारी तथा चात्र भिद्यते मृदुमध्यतः ॥ २ ॥
मन्दाधिकारी संप्राप्य देशिकेन्द्रं दयानिधिम् ।
श्रोत्रियं ब्रह्मनिष्ठञ्च निष्कामं ब्रह्मवित्तमम् ॥ ३ ॥
तमाराध्य गुरुं भक्त्या मनोवाक्कायकर्मभिः ।
प्रसन्नं तमनुप्राप्य पृच्छेत्कर्तव्यमात्मनः ॥ ४ ॥
भगवन्मे महद्दुःखं समागतं पुनः पुनः ।
न पश्यामि प्रतीकारं तेन तप्तोऽस्मि चेतसा ॥ ५ ॥
गर्भवासे महद् दुखं बाल्ये दुःखं तथैव च ।
आधि व्याधिकृतं दुःखं भुक्तं मया पुनः पुनः ॥ ६ ॥
किं कर्तव्यं न जानामि केन दुःखं निवार्यते ।
ब्रूहि मे करुणासिन्धो कृपया शरणागतम् ॥ ७ ॥
शरण्यं मुमुक्षुं वीक्ष्य कृपयाविष्टचेतसम् ।
शास्त्रज्ञानविहीनञ्च श्रद्धाविनयसंयुतम् ॥ ८ ॥

यथोक्तकारिणं तस्मै मुमुक्षुं दीनचेतसम् ।
यथाधिकारिणे दद्यान्मन्त्रं ब्राह्मं सुमंगलम् ॥ ९ ॥
संस्कारवशतः स्याच्च भिन्ना देवे रुचिर्नृणाम् ।
परीक्ष्य सद्गुरुः प्राज्ञो मन्त्रं दद्यात्सशक्तिकम् ॥ १० ॥
अष्टाक्षरो भवेद्विष्णोः पञ्चाक्षरः शिवस्य च ।
सप्ताक्षरो भवेद् ब्राह्मयः सर्व एव सशक्तिकः ॥ ११ ॥
ब्रह्ममन्त्रो मुमुक्षूणां ब्रह्मलोकप्रदायकः ।
तन्त्रे तु गीयते यद्वत्तदेवात्र वितन्यते ॥ १२ ॥
अकारेण जगत्पाता संहर्ता स्यादुकारतः ।
मकारेण जगत्स्रष्टा प्रणवार्थः प्रकीर्तितः ॥ १३ ॥
सच्छब्देन सदा स्थायि चिच्चैतन्यं विदुर्बुधाः ।
एकमद्वैततत्त्वं तु बृहत्त्वाद् ब्रह्म गीयते ॥ १४ ॥
मन्त्रचैतन्यमेतद्धि ब्रह्माधिष्ठातृदेवता ।
ऋषिः सदाशिवो ह्यस्य स्याच्छन्दोऽनुष्टुवं स्मृतम्॥१५॥
ओंकारं पूर्वमुच्चार्य सच्चित्पदं ततः परम् ।
एकं ब्रह्म ततो ब्रूयात्सप्तार्णं मन्त्रकोविदः ॥ १६ ॥
प्रथमं मन्त्रमुच्चार्य्य अङ्गुष्ठादि क्रमेण च ।
नमः स्वाहा वषट् हूं च वौषट् फट् ततः स्मरेत् ॥ १७ ॥
करन्यास इति प्रोक्तः प्रणायामं ततः शृणु ।
अष्टौंकारं समुच्चार्य वामनासिकया वायुम् ॥ १८ ॥

पूरयेन्मृदुवेगेन मूलमन्त्रेण वा पुनः ।
ओंकारं द्वात्रिंशं जप्त्वा कुम्भयेत्तु प्रयत्नतः ॥ १९ ॥
षोडशोंकारमात्रया रेचयेच्च पुनः पुनः ।
वामनासिकयाऽऽपूर्य दक्षिणेन विसर्जयेत् ॥ २० ॥
इति प्राणायामः प्रोक्तः साधकानां हिताय वै ।
ततो ध्यात्वा परं ब्रह्म सच्चिद्रूपं सदोदितम् ॥ २१ ॥
जन्ममृत्युभयभ्रंशि कारणं विश्वतोमुखम् ।
पूजयेद् गन्धादिद्रव्यैर्मानसैश्च यथाविधि ॥ २२ ॥
गन्धं दद्यान्महीतत्त्वं पुष्पमाकाशमेव च ।
धूपं दद्याद्वायुतत्त्वं दीपं तेजः समर्पयेत् ॥ २३ ॥
नैवेद्यं तोयतत्त्वेन प्रकल्प्य परमात्मनि ।
मन्त्रं जप्त्वा समाधानो ब्रह्मार्पणं समाचरेत् ॥ २४ ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणाहुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २५ ॥
पठित्वा कवचं पूर्वं ब्रह्मस्तोत्रं पठेत्परम् ।
क्रमेण दर्श्यते सर्वं कवचं प्रथमं शृणु ॥ २६ ॥
परमात्मा शिरः पातु हृदयं परमेश्वरः ।
कण्ठं पातु जगत्पाता वदनं सर्वदृग्विभुः ॥ २७ ॥
करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः ।
सर्वाङ्गं सर्वदा पातु परब्रह्म सनातनम् ॥ २८ ॥

अनेन कवचं जप्त्वा ततस्तोत्रं पठेत्सुधीः ।
नमस्ते विश्वबीजाय नमस्ते विश्वमूर्तये ॥ २९ ॥
लोकाश्रयाय च तुभ्यं नमस्ते विश्वरूपिणे ।
नमस्ते भासरूपाय नमस्ते मुक्तिदायिने ॥ ३० ॥
नमोऽद्वैततत्त्वाय नमस्ते सर्वधारिणे ।
निर्गुणाय नमस्तुभ्यं सगुणाय नमो नमः ॥ ३१ ॥
शरण्याय वरेण्याय कारणाय नमोऽस्तु ते ।
कर्त्रे धात्रे प्रहर्त्रे च निश्चलाय चलात्मने ॥ ३२ ॥
अचिन्त्याय नमस्तुभ्यं सच्चिदानन्दमूर्तये ।
त्वामेव शरणं यामि पाहि मां परमेश्वर ॥ ३३ ॥
कृपया देहि मे स्थानं परमपावने पदे ।
शरणागतदीनार्तं पाहि मां परमेश्वर ॥ ३४ ॥
पंचरत्नमिदं स्तोत्रं यः पठेत्प्रयतः शुचिः ।
सर्वविघ्नसमुत्तीर्णः स याति परमां गतिम् ॥ ३५ ॥
ब्रह्मस्तोत्रं पठित्वा तु गायत्रीं ब्रह्मतारिणीम् ।
जप्त्वा मन्त्रं यथाशक्ति सर्वपापात्प्रमुच्यते ॥ ३६ ॥
परमेशाय विद्महे परतत्त्वाय धीमहि ।
तन्नो ब्रह्मप्रचोदयादिति मन्त्रं ततो जपेत् ॥ ३७ ॥
इति मया समाख्यातो ब्रह्ममन्त्रः समासतः ।
उच्यते चित्तशुद्ध्यर्थं साधकहितकाङ्क्षिणा ॥ ३८ ॥

ज्ञानयोगसमाधीनां मन्त्रजपो विधीयते ।
चित्तशुद्धिक्रमात्तेन क्रममुक्तिरवाप्यते ॥ ३९ ॥
मध्याधिकारिणं प्राप्य देशिकेन्द्रः कृपानिधिः ।
प्रणवार्थविचारे तु कर्मनिष्ठं नियोजयेत् ॥ ४० ॥
"अष्टांगं च चतुष्पादं त्रिस्थानं पंच दैवतम् ।
ओंकारार्थं न जानाति ब्राह्मणो न भवेत्तु सः ॥ ४१ ॥

( ध्यानविन्दूपनिषदि )

ओमित्येकाक्षरं ब्रह्म ध्येयं सर्वैर्मुमुक्षुभिः ।
तदर्थभावनं हित्वा ध्यानमपि वृथा भवेत् ॥ ४२ ॥
यदि शैलसमं पापं विस्तीर्णं वहुयोजनम् ।
भिद्यते ध्यानयोगेन प्रत्यक्षं वदति श्रुतिः ॥ ४३ ॥
पृथिव्यग्निश्च ऋग्वेदो भूरित्येव पितामहः ।
अकारे तु लयं प्राप्ते प्रथमे प्रणवांशके ॥ ४४ ॥
अन्तरिक्षं यजुर्वायुर्भुवो विष्णुर्जनार्दनः ।
उकारे तु लयं प्राप्ते द्वितीये प्राणवांशके ॥ ४५ ॥
द्यौः सूर्यः सामवेदश्च स्वरित्येव महेश्वरः ।
मकारे तु लयं प्राप्ते तृतीये प्रणवांशके ॥ ४६ ॥
अकारः पीतवर्णः स्याद्रजोगुण उदीरितः ।
उकारः सात्त्विकः शुक्लो मकारः कृष्णतामसः ॥ ४७ ॥
अकारोकारमकारोऽर्धमात्रा ततः परम् ।
विन्दु-नाद-कलाचेति कलातीत इति क्रमात् ॥ ४८ ॥

अष्टांगं प्रणवस्यात्र दीयते शृणु साम्प्रतम् ।
मुमुक्षुरेतद्विज्ञाय तद्ध्यानं च समाचरेत् ॥ ४६ ॥
विश्वतैजसप्राज्ञश्च तुर्येति पादयोजना ।
विराट् हिरण्यगर्भादि भेदेन वा प्रकीर्तितम् ॥ ५० ॥
नेत्रं कण्ठं हृदो मध्यं स्थानं त्रिविधमीरितम् ।
कैलासं वैष्णवं ब्राह्मच भूर्भुवःस्वस्तथाऽपि वा॥ ५१ ॥
ब्रह्मा विष्णुश्च रुद्रेशः सदाशिवस्तथाऽपरा ।
देवताः पंच विज्ञेयाः साधकहितसाधकाः ॥ ५२ ॥
विश्वेन जाग्रतावस्था विराजा प्रथमेन च ।
चिन्तयेत्साधकः प्राज्ञ एकत्वं परिकल्पयन् ॥ ५३ ॥
तैजसेनैव स्वप्नेन हिरण्यगर्भसाधितः ।
उकारं चिन्तयेत्तत्र पूर्ववत्परिकल्पयन् ॥ ५४ ॥
प्राज्ञेन सुप्तिकालेन ईश्वरेण तथैव हि ।
मकारेणापि चैकत्वं भावयेन्मोक्षकामधीः ॥ ५५ ॥
अर्धमात्राऽक्षरात्मिका साऽनिर्वाच्या विशिष्यते ।
स्तब्धभावाद्भवेदेषा सर्वेषां ज्ञानगोचरा ॥ ५६ ॥
यो नादमात्रयोर्मध्ये ताराकारः प्रतीयते ।
तदेव विन्दुनाम्ना च साधकैः परिगीयते ॥ ५७ ॥
अकारोकारमकारः क्रमेण परमात्रयोः ।
लीने सति सदाऽभ्यस्ता नादस्तत्र प्रसूयते ॥ ५८ ॥

सिद्धासने स्थितो योगी यतवाक्कायमानसः ।
शृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं हृदि ॥ ५९ ॥
अभ्यस्ते संयते नादे बहिरात्रियते ध्वनिः ।
नादासक्तं तदा चित्तं लयं याति सुखेन वै ॥ ६० ॥
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।
आदौ जलधिजीमूत-भेरीनिर्झरसंभवः ॥ ६१ ॥
मध्ये मृदङ्गशब्दाभो घन्टाकाहलजस्तथा ।
अन्ते तु किंकिणीवंशवीणाभ्रमरनिस्वनः ॥ ६२ ॥
श्रूयमाणे तु भेर्यादौ मनो नात्र निवेशयेत् ।
सूक्ष्मात्सूक्ष्मतरं श्रुत्वा स्थूलात्सूक्ष्मं निवेशयेत् ॥ ६३ ॥
रममाणमपि क्षिप्तं स्थूलात्सूक्ष्ममहर्निशम् ।
न मनश्चालयेत्तत्र नादेन तु विलापयेत् ॥ ६४ ॥
कर्णौ पिधाय हस्ताभ्यां यां शृणोति ध्वनिं मुनिः ।
तत्र चित्तं स्थिरीकुर्याद्यावत्स्थिरपदं व्रजेत् ॥ ६५ ॥
विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः ।
एकीभूयाथ शीघ्रं हि चिदाकाशे विलीयते ॥ ६६ ॥
मकरन्दं पिबन्भृङ्गो गन्धान्नापेक्षते यथा ।
नादासक्तं तथा चित्तं विषयान्नैव वाञ्छति ॥ ६७ ॥
नादबिन्दौ रमन्ते ये बध्यन्ते नात्र संशयः ।
नादासक्तो भवेद् बद्धः सारङ्गो वीणया यथा ॥ ६८ ॥

नादश्रुतिं परित्यज्य विन्दुकारं समभ्यसेत् ।
नादान्ते हृद्गतं ज्योतिः कलानाम्नी प्रकाशते ॥ ६९ ॥
ज्योतिरन्तर्गतं तेजः कलातीतं तदुच्यते ।
तेजस्वि लीयते चित्तं तदा तत्परमं पदम् ॥ ७० ॥
ब्रह्मप्रणवसंयुक्तं नादज्योतिर्मयात्मकम् ।
मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ॥ ७१ ॥
नादो यावन्मनस्तावन्नादान्ते तु मनोन्मनी ।
निःशब्दं पदं संप्राप्य मनो ब्रह्मणि लीयते ॥ ७२ ॥
यत्किञ्चिच्छ्रुयते शब्दो दृष्टं वा मानसं तथा ।
तद्धि मायामयो वीक्ष्य सर्व-भावं परित्यजेत् ॥ ७३ ॥
स्वदेहे विश्वरूपञ्च दृश्यते प्रथमेन वै ।
अभ्यासाद्रमते यस्तु नादविन्दावहर्निशम् ॥ ७४ ॥
भूर्लोकः पादयोर्मध्ये भुवर्लोकस्तु जानुनि ।
भुवर्लोकः कटीदेशे नाभिदेशे महर्जगत् ॥ ७५ ॥
जनलोकस्तु हृद्देशे तपः कण्ठे प्रतिष्ठितम् ।
सत्यलोको भ्रुवोर्मध्ये ब्रह्मलोकश्च मूर्धनि ॥ ७६ ॥
आश्चर्यं वीक्षते चात्र विविधं बुद्धिकौतुकम् ।
न वक्तव्यमिदं गुह्यं मूर्खायानधिकारिणे ॥ ७७ ॥
नादासक्तं मनः प्राप्य तत्त्वहीनं जडाकृतम् ।
अजपा नाम गायत्रीमभ्यसेत्साधको यतिः ॥ ७८ ॥

श्वासेन 'सः' समानीय प्रश्वासेन हमानयेत् ।
सोऽहमिति परो मन्त्रो मोक्षदो योगिनां सदा ॥ ७९ ॥

सकारो हकारो यत्र लीयेते तदनाकुलम् ।
तत्रैव मनसि स्थैर्य्ये मनः प्राणैर्विलीयते ॥ ८० ॥

शेषः शुद्धश्चिदानन्दो व्यापकः सर्वभासकः ।
आवरणक्षयात्पुंसः सदैव प्रतिभासते ॥ ८१ ॥

शुद्धे चित्ते चिदानन्दः स्वयमेव प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ८२ ॥

अभक्ताय न दातव्यो मूर्खाय विषयैषिणे ।
दत्तेऽपि फलदो न स्यात्षण्ढाय वनिता यथा ॥ ८३ ॥

प्रज्ञायोगात्सिद्धिर्यस्य न सम्यगुपजायते ।
निश्चयं विद्धि वै तस्य प्रतिबन्धः प्रसज्यते ॥ ८४ ॥

प्रतिबन्धक्षयाच्चास्य सम्यग्ज्ञानं भविष्यति ।
अन्यथा ब्रह्मलोकादि प्राप्तिः केन निवार्यते ॥ ८५ ॥

श्रेष्ठाधिकारिणं प्राज्ञं मेधाविनं विवेकिनम् ।
विद्वांसं निःस्पृहं शान्तं शमादिगुणशालिनम् ॥ ८६ ॥

साधनसंयुतं शुद्धं बुद्धिमन्तं विचक्षणम् ।
विचारकुशलं नम्रं शुश्रूषन्तं सुधार्मिकम् ॥ ८७ ॥

उपदिशेच्छुभां विद्यां नेतराय कदाचन ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिध्यति ॥ ८८ ॥

संसारतापदग्धं तं त्रिलोक्यासौ महामतिः ।
दत्त्वाभयं विहस्यापि वदेद्वाचमनिन्दिताम् ॥ ८९ ॥
मा भैष्ठत्त्व सौम्य संसारादस्त्युपायो विमुक्तये ।
येन महाजनाः प्राप्तास्तद्विष्णोः परमं पदम् ॥ ९० ॥
अविचारकृतो बन्धो दुःखं तस्मात्प्रजायते ।
वेदान्तशुद्धया बुद्धया हानिरपि प्रपद्यते ॥ ९१ ॥
अज्ञानप्रभवो बन्धस्तदज्ञानपरिक्षयात् ।
समूलं तस्य कार्यस्य नाशः पुनर्भविष्यति ॥ ९२ ॥
अनात्मन्यातमवद् बोधो मोहात्खलूपजायते ।
शरीरादिषु चात्मत्वं बन्ध इत्यभिधीयते ॥ ९३ ॥
ग्रामादि किंचिदप्राप्तं प्राप्तुमिष्टमिहेच्छति ।
हेमादि विस्मृतं किंचित्करस्थमपि कांक्षति ॥ ९४ ॥
परिहार्यं तथानिष्टं कण्टकादीञ्जिहासति ।
रज्ज्वां सर्पादि किंचिच्च त्यक्तमेव जिहासति ॥ ९५ ॥
नियतोपायसाध्यत्वादवाप्यपरिहार्ययोः ।
विधितः प्रतिषेधाच्च साधनापेक्षिता भवेत् ॥ ९६ ॥
अज्ञानान्तरितत्वेन निषेधप्रतिषेधयोः ।
याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्प्यते ॥९७॥
न स्नानेन न दानेन न पूजया जपेन वा ।
भ्रान्त्योदितो महासर्पो रज्जुबोधात्पलायते ॥ ९८ ॥

रज्जुज्ञानाद्यथासर्पः स्वयमेव पलायते ।
स्वस्वरूपे तथा ज्ञाते मोहः कुत्र पलायते ॥ ९९ ॥

विदित्वा तं भवेन्मुक्तिर्नान्यः पन्था विमुक्तये ।
कर्मयोगादि सम्पत्तिं साक्षान्निषेधति श्रुतिः ॥१००॥

सन्न्यस्य श्रवणं कुर्यान्मननं च ततः परम् ।
ध्यानेन स्वरूपं ज्ञात्वा निर्वाणमधिगच्छति ॥१०१॥

अतस्मिन् या तदाकारा बुद्धिः सा मोह उच्यते ।
मोहेन कल्प्यते ह्येषा रज्जुखण्डे भुजंगवत् ॥१०२॥

अनात्मनि च देहादौ याहं बुद्धिर्ममेति वा ।
सा सर्वदा विहातव्या नान्यात्र पुरुषार्थता ॥१०३॥

अखण्डबोधरूपात्मा स्वतमसा समावृतः ।
अहं ममेति देहादौ कल्पयति स्वमायया ॥१०४॥

भास्करेणोत्थितो मेघस्तमावृत्य विजृम्भते ।
तथैवात्मानमावृत्य मोहः स्वयं विजृम्भते ॥१०५॥

अर्कावृते यथा मेघे शैत्याद् दुःखं भृशं भवेत् ।
अज्ञानावृतमात्मानं तमो विक्षिप्यते तथा ॥१०६॥

आवरणविक्षेपाभ्यां बन्धः पुंसः समागतः ।
याभ्यां विमोहितो देहं मत्वाऽऽत्मानं विनश्यति॥१०७॥

न त्वं देहो जडरूपो मांसास्थिपरिपूरितः ।
जन्मनाशादिमत्वाच्च विनश्वरो घटादिवत् ॥१०८॥

देहतद्धर्म तत्कर्म तदवस्था रूपादिकम् ।
देहस्यैव स्वतःसिद्धं त्वमेतेभ्यो विलक्षणः ॥१०९॥

इन्द्रियाणां लये स्वप्ने स्वप्नद्रष्टा त्वमेव हि ।
अतो न त्वमिन्द्रियाणि तेषां साक्षी स्वयंप्रभः ॥११०॥

न त्वं प्राणो जडो रूपः क्रियावानाशुगश्चलः ।
स्वं वान्यं वा न जानाति स्वापेह्यसौ जडात्मकः॥१११॥

न त्वं मनो विकल्पात्मा तस्य साक्षी सुनिश्चितः।
भोक्तादिकल्पनात्तस्य स्वापे चाप्यनुभूयते ॥११२॥

सुषुप्तौ लीयते यस्मान्न किंचिदुपलभ्यते ।
मनः कल्पितसंसारः तद्विलये विनश्यति ॥११३॥

घटद्रष्टा घटाद्भिन्नो मनो द्रष्टा तथैव हि ।
परिणामि भवेदेतत्त्वमेतस्माद्विलक्षणः ॥११४॥

न त्वं बुद्धि र्जडरूपा या भुंक्ते विषयानिह ।
सुखं दुःखं भवेत्तस्या न ते दुःखं कदाचन ॥११५॥

उपाधिमेनमाश्रित्य कर्तृत्वं ते न वस्तुतः ।
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ॥११६॥

अहंकारो न वै चासि तस्य द्रष्टा स्वयंप्रभः ।
सुषुप्तौ विलयस्तस्य न ते लयः कदाचन ॥११७॥

इष्टार्थलाभजानन्दः पुण्यानुभवसाधनः ।
सोऽपि न त्वं विकारत्वात्कार्यत्वात्प्रियनामकः॥११८॥

पंचकोशाद्विविक्तस्त्वं तेषां साक्षी स्वयंप्रभः।
अवस्थात्रयसाक्षी त्वं निर्विकारो निरंजनः ॥११९॥

व्योमादि पंच भूतानि जायन्ते परमात्मनः।
जन्मनाशौ न ते वा स्तः कूटस्थत्वादजन्मनः॥१२०॥

सुषुप्तौ सुखमस्वाप्सं नाहं किंचिदवेदिषम्।
स्मृत्यानुमीयते पश्चादज्ञानेन तव स्थितिः ॥१२१॥

समाधौ तदभावात्तु त्वमसि सुखरूपकः।
अन्वयव्यतिरेकाभ्यामात्मा त्वमसि केवलः ॥१२२॥

ब्रह्माभिन्नत्वविज्ञानं भवबन्धविमुक्तये।
विज्ञातव्यमतः सम्यग्ब्रह्माभिन्नत्वमात्मनः ॥१२३॥

सत्यं ज्ञानमनन्तं च विशुद्धं शाश्वतं शिवम्।
ज्ञानात्पश्चात्तथैवात्मा सच्चिदानन्दरूपकः ॥१२४॥

सता भिन्नं न वै द्रव्यं सद्रूपमद्वयं ततः।
मृदो भिन्नो यथा कुम्भो न कुत्राप्यवलोक्यते ॥१२५॥

कल्पितनामरूपाभ्यां न वस्तु परिहीयते।
सद्-ब्रह्मकार्यरूपत्वाद् ब्रह्मैवाभाति भास्वरम् ॥१२६॥

यदि सत्यं भवेद्विश्वं सुषुप्तावुपलभ्यताम्।
यतो न ज्ञायते किंचिन्मृषा ततो विनिश्चिनु ॥१२७॥

सत्यं न बाधते यस्माद् बाध्यस्य सत्यता नहि।
ब्रह्म सत्यं जगन्मिथ्या तयोरेतद्विवेचनम् ॥१२८॥

ब्रह्मण्यारोपितं विश्वं शुक्तौ रजतसन्निभम् ।
आरोपितैर्न लिप्येत मरुभूमिर्जलैर्यथा ॥१२९॥

यस्य भासा जगद् भाति तद् ब्रह्म सर्वभासकम् ।
आनन्दाज्जायते सर्वं वक्ति श्रुतिर्गरीयसी ॥१३०॥

सच्चिदानन्दरूपेण तत्त्वं पदद्वयोर्मिथः ।
ब्रह्मात्मनोर्विशुद्धयोः श्रुत्यापि प्रतिपादिता ॥१३१॥

तत्त्वमसि महावाक्याल्लक्ष्यार्थे एकता द्वयोः ।
न वाच्यार्थे भवेदेतदन्योन्यप्रतिरोधिनोः ॥१३२॥

माया तत्कार्यमीशस्य चोपाधिर्महदादिकम् ।
जीवस्याज्ञान तत्कार्यं पंचकोशं विदुर्बुधाः ॥१३३॥

त्र्यवस्थाभासकस्त्वं च परप्रेमास्पदःस्थितः ।
मा न भूवं भूयासं च प्रत्यक्षमनुभूयते ॥१३४॥

जीवेश त्वमपि ह्येकेकल्पितं ब्रह्मणि द्वयम् ।
कल्पितस्य मृषात्वेन पश्चादेकोऽवशिष्यते ॥१३५॥

भागत्यागेन लक्ष्यार्थे उभयोरेकता स्मृता ।
ब्रह्माहमस्मि निश्चित्य कृतकृत्यः सुखी भव ॥१३६॥

निद्राकल्पितदेहादिर्यथा मिथ्या स्वजाग्रति ।
अज्ञानकार्यतः सर्वं तथा मिथ्या देहादिकम् ॥१३७॥

जातिर्नाम कुलं गोत्रं रूपं गुणो दोषश्च यत् ।
तत्सर्वं मायिकं विद्धि तत्त्वमसि सदाऽद्वयम् ॥१३८॥

वाचातीतं क्रियातीतं मनोऽतीतं यदस्ति वै ।
तत्त्वमसि न देहात्मा शुद्ध-बुद्ध-स्वरूपवान् ॥१३९॥
निष्कलं निश्चलं शान्तं निराख्यातं निरंजनम् ।
यद् ब्रह्म निर्मलं शुद्धं तत्त्वमसि न चापरः ॥१४०॥
सर्वभेदविनिर्मुक्तः सर्वभावविवर्जितः ।
सत्यं ज्ञानमनन्तस्त्वं ब्रह्माद्वयो निरंजनः ॥१४१॥
जन्मादि यानि भावानि देहस्यैव न चात्मनः ।
देहाद्भिन्नो निराकारस्तत्त्वमसि न चापरः ॥१४२॥
अहं ममेति यो भावो शरीरादावनात्मनि ।
अध्यासोऽयं निरस्तव्यः सततमात्मचिन्तया ॥१४३॥
वासनावशतो नृणां ज्ञातेऽपि परमात्मनि ।
कर्ताहं विपरीद्बुद्धि र्जायते च पुनः पुनः ॥१४४॥
साक्षिणं बुद्धिनृत्यस्य ज्ञात्वाऽऽत्मानं स्वयंप्रभम् ।
सोऽहमस्मीति सद्वृत्त्या कालं नय महामते ॥१४५॥
त्रिविधां वासनां त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ।
स्वात्मन्येव सदा स्थित्वा मनोनाशं ततः कुरु ॥१४६॥
यावत्सर्वमिदं किंचित्स्वप्नवन्नैव भासते ।
तावन्निरन्तरं त्वं तु स्वात्मानमेव चिन्तय ॥१४७॥
अभिमानं दुराधर्षं त्यक्त्वा दूरं विचारतः ।
अखण्डबोधमात्मानं ज्ञात्वा शान्तिं समाविश ॥१४८॥

अहंकारो महाग्राहो यत्नेन तं निकृन्तत ।
तस्मिन्स्थिते न मुक्तिः स्याच्छास्त्रयुक्तिशतैरपि ॥१४९॥

विज्ञानासिसहायेन छित्वाहंकारमात्मनः ।
भुंक्व त्वं विजितं राज्यं शत्रुहीनमनाकुलम् ॥१५०॥

यथापकृष्टशैवालं क्षणमपि न तिष्ठति ।
आवृणोति तथा माया साधकं तत्त्वविच्युतम् ॥१५१॥

प्रमादात्क्षणमव्यग्रं विषयस्यानुचिन्तनम् ।
यतः कामस्ततः क्रोधः क्रोधान्मोहः प्रजायते ॥१५२॥

ततः स्वरूपविभ्रंशो विभ्रष्टस्तु पतत्यधः ।
पतितस्य विना नाशं नारोहः खलु विद्यते ॥१५३॥

ब्रह्माकारो हि चित्तस्यस्वभावो वर्तते सदा ।
विषयाकारता तस्य पौरुषेण प्रपद्यते ॥१५४॥

वियद्वस्तुस्वभावानुरोधादेव न कारकात् ।
वियत्सम्पूर्णतोत्पत्तौ कुम्भस्येव दशा धियाम् ॥१५५॥

समाधिर्वासनानाशे कारणं शास्त्रवर्णितम् ।
प्रमादनाशकश्चैव प्रत्यक्षमनुभूयते ॥१५६॥

समाधिना नयेत्कालं वृथा चिन्तां विवर्जयेत् ।
ध्यानेन विलयं यान्ति पापानि बहुजन्मनाम् ॥१५७॥

समाधेः प्रथमं द्वारं वाङ्-निरोधोऽपरिग्रहः ।
निराशा च निरीहा च नित्यमेकान्तसेवनम् ॥१५८॥

ब्रह्मादिदेहपर्यन्ता मृषा मात्रा उपाधयः ।
तानशेषान्परित्यज्य पश्य स्वात्मानमात्मनि ॥१५९॥
अन्तः स्वयं वहिर्वापि स्वयं पुरः स्वयं परे ।
स्वयं सर्वत्र संलोक्य स्वयमेवावशिष्यते ॥१६०॥
अन्तःशून्यं वहिःशून्यं शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो वहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥१६१॥
स्वस्वरूपं स्वयं ज्ञात्वा स्वरूपे रमणं कुरु ।
स्वस्मादन्यं न द्रष्टव्यं विनश्यसि विनश्यसि ॥१६२॥
निर्विकारे निराकारे निर्विशेषे निरञ्जने ।
द्वैतस्य सम्भवो न स्यान्मरुभूमौ जलं यथा ॥१६३॥
मायामात्रमिदं द्वैत मद्वैतं परमार्थतः ।
इति ब्रूते श्रुतिः साक्षात्सुषुप्तावनु भूयते ॥१६४॥
मनोमात्रमिदं द्वैतं यत्किञ्चित्सचराचरम् ।
मनसि विलयं प्राप्ते द्वैतं नैवोपलभ्यते ॥१६५॥
निर्विकल्पात्मना स्थित्वा द्वैतं पश्य महामते ।
पश्यसि चेत्किमप्यत्र ब्रूहि मे किन्नु साम्प्रतम् ॥१६६॥
इति गुरोर्वचः श्रुत्वा शिष्योऽभूदचलाकृतिः ।
समाहितः क्षणं स्थित्वा ततो वचनमब्रवीत् ॥१६७॥
भगवन् बुद्धिर्मे नष्टा नष्टो मोहस्तया सह ।
अखण्डानन्दपीयूषे नास्ति किञ्चिदिदं जगत् ॥१६८॥

इदं किञ्चिन्न पश्यामि चानिदमपि तादृशम् ।
अखण्डानन्दमग्नोऽस्मि न जाने किं त्वया कृतम् ॥१६९॥

यदानन्दो मया प्राप्तस्तत्प्रसादात्परात्मनि ।
वाचा वक्तुं न शक्नोमि जानाम्यहं न चापरः ॥१७०॥

संशयो मे न वै भाति ब्रह्माद्वैतविनिश्चितम् ।
तदेवाहं परं ब्रह्म मदन्यन्नास्ति किंचन ॥१७१॥

किं करोमि क्व गच्छामि किमिच्छामि त्यजामि किम् ।
मयैव पूरितं विश्व माकाशं वायुना यथा ॥१७२॥

न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।
न चान्यदिह पश्यामि सर्वं मया ततं जगत् ॥१७३॥

असङ्गोऽहमनङ्गोऽहमलिङ्गोऽहमनामकः ।
शुद्ध-बुद्ध-स्वरूपोऽहम् निर्विकारो निरञ्जनः ॥१७४॥

क्षुत्पिपासे न मे च स्तः प्राणस्यैते न मे क्वचित् ।
कर्तृ-भोक्तृकथा बुद्धेर्न चैव मे कथंचन ॥१७५॥

परधर्मं समाश्रित्य स्वात्मानं पीडयाम्यहम् ।
परद्रव्यापहारेण यथा चौरः प्रपीड्यते ॥१७६॥

इदन्त्वया पुरा दृष्टमहं त्वया हि साम्प्रतम् ।
नेदं पश्यामि किञ्चिच्च नात्र किञ्चिदिदं वपुः ॥१७७॥

सच्चिदानन्दपूर्णे तु मयि शुद्धे विनिर्मले ।
ब्रह्माण्डादितरङ्गस्तु ~~क्षणेनोत्थाय~~ लीयते ॥१७८॥
क्षणेनोत्थाय

स्थूलसूक्ष्मशरीरादि कल्पिता मयि चिन्मये ।
कल्पितस्य कुतस्तत्त्वं निर्विकल्पे परात्मनि ॥१७९॥
गुञ्जापुञ्जो न दह्येत परारोपितवह्निना ।
बुद्ध्यारोपितधर्मेण नाहं लिप्ये कदाचन ॥१८०॥
सर्वावभासकः सूर्यस्तद्गुणैर्नैव लिप्यते ।
देहावभासकः साक्षी देहधर्मैर्न लिप्यते ॥१८१॥
उपाधेर्जन्मनाशोऽस्ति सहि भुंक्ते शुभाशुभम् ।
तस्य द्रष्टा स्वयंज्योतिस्तद्धर्मैर्नहि लिप्यते ॥१८२॥
न नभो घटयोगेन सुरागन्धेन लिप्यते ।
देहस्थोऽपि तथा नाहं विलिप्ये देहधर्मभिः ॥१८३॥
न कर्ताहं न भोक्ताहं पुण्यपापे कथं मयि ।
उष्णशीतं यथा स्पृष्टं छायायां नैव छायिनम् ॥१८४॥
न साक्षिणं तथा धर्माः संस्पृशन्ति मनागपि ।
अविकारमुदासीनं देहधर्माः स्पृशन्ति न ॥१८५॥
निष्क्रियोऽहमनारम्भो जगद्विकारसंकुलम् ।
अतो नाहं जगत्किन्तु ब्रह्मैवाहं सनातनम् ॥१८६॥
न मे जन्म न मे मृत्युर्न मे शोको न मे क्षुधा ।
सर्वोपाधिविनिर्मुक्तो ब्रह्माहमिति निश्चितः ॥१८७॥
सत्यं ज्ञानमनन्तं च यद् ब्रह्मश्रुतिकीर्तितम् ।
तदेवाहं न चान्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥१८८॥

न मे बन्धो न मे मुक्ति र्न मे दुःखं मुमुक्षुता ।
केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरः ॥१८९॥

स्वसाम्राज्यो मयालब्धस्त्वत्प्रसादादहो गुरो ।
प्रतिदानं न पश्यामि नमस्तुभ्यं नमोनमः ॥१९०॥

शिष्यमवनतं दृष्ट्वा प्रबुद्धं हृष्टचेतसम् ।
देशिकेन्द्र उवाचेदं वचो मधुरया गिरा ॥१९१॥

वत्स त्वं वेत्सि भावार्थं यदुक्तं शास्त्रयुक्तिभिः ।
इदानीं पुनरभ्यासाद्दृढीकुरु परात्मनि ॥१९२॥

अकृत्वा दृश्यसंहारमज्ञात्वा तत्त्वमात्मनः ।
नहि बाह्येन शब्देन विमुक्तिरधिगम्यते ॥१९३॥

अकृत्वा शत्रुसंहारमकृत्वा राज्यसंचयम् ।
राजाहमिति शब्दान्न राजा भवितुमर्हति ॥१९४॥

अनुभूत्या स्वयं ज्ञात्वा सुष्ठु सार्वात्म्यमात्मनः ।
नान्यमवसरं दद्यात् कामादीनां मनागपि ॥१९५॥

परानन्दरसं त्यक्त्वा शून्ये को रमते बुधः ।
हस्तस्य ग्रासमुज्झित्य छायाग्रासमिहेच्छति ॥१९६॥

न सुखं विफलैर्द्रव्यै र्न तृप्तिः स्याद्विवेकिनः ।
सदात्मनिष्ठया तृप्तः कालं नय महामते ॥१९७॥

यावत्कामोद्भवा पीडा यावत्ते च क्रोधादयः ।
तावन्नोदासीनो भूत्वा क्षणं तिष्ठ महामते ॥१९८॥

तूष्णीं स्थित्वा परां शान्तिं लभस्व विगतज्वरः ।
मौनान्निर्वासनान्नान्यदस्ति सुखमनुत्तमम् ॥१९९॥
मुहूर्तमपि नातिष्ठेद्वृत्तिं ब्रह्ममयीं विना ।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्या महाधियः ॥२००॥
आत्मबोधात्परं नास्ति स्थानादेः प्रतिबन्धता ।
यत्र कुत्र स्थितः पश्येदात्मानं सर्वभासकम् ॥२०१॥
न मोदस्व प्रियं प्राप्य नोद्वेगं भज चाप्रियैः ।
आत्मक्रीडो विधेयात्मा भजस्वात्मानमात्मनि ॥२०२॥
देहव्यथां परित्यज्य बालः क्रीडति कन्दुकैः ।
विस्मृत्य सकलं बाह्यं तथैवात्मरतिं कुरु ॥२०३॥
प्रारब्धं वै शरीरस्य तद् भवेदिति निश्चयम् ।
ज्ञात्वा रोगप्रणाशाय वृथा यत्नं परित्यज ॥२०४॥
प्रारब्धं वै भवेत्तस्य यस्य देहात्मना स्थितिः ।
देहात्मता न ते चास्ति प्रारब्धं त्यज्यतामतः ॥२०५॥
ज्ञानोदयात्पुरारब्धं कर्म ज्ञानान्न नश्यति ।
अदत्वा सकलं लक्ष्यमुद्दिश्योच्छिष्टबाणवत् ॥२०६॥
भोगेन क्षीयते नान्यैः प्रारब्धं बलवत्तरम् ।
संचितागामिकर्मणां ज्ञानेन क्षयमीक्ष्यते ॥२०७॥
अपितु ज्ञाततत्त्वस्य विक्षेपो दृश्यते सदा ।
ब्रह्मस्थितेरभावात्तु प्रारब्धैर्बलवत्तरैः ॥२०८॥

यथा दग्धपटस्यापि क्षणं स्थितिः प्रतीयते ।
ज्ञानेन दग्धदेहस्य प्रारब्धैर्भानमिष्यते ॥२०९॥

सर्वदा ब्रह्मभावेन स्थितिर्येषां निरंकुशा ।
तेषांतत्त्रितयं नास्ति ब्रह्मैव ते न संशयः ॥२१०॥

मिथ्यार्थग्रहणे यस्य चित्तवृत्तिर्नियुज्यते ।
न मायया विनिर्मुक्तो बद्ध एव स निश्चितः ॥२११॥

कर्मणा निर्मितो देहः प्रारब्धं तस्य विद्यते ।
नैवात्मा कर्मनिर्मितः प्रारब्धमजनेः कुतः ॥२१२॥

ब्रह्मात्म नोर्विशुद्धयो रेकभावानुशायिनी ।
वृत्त्या सकार्यमज्ञानं लीयते श्रुतिरब्रवीत् ॥२१३॥

भोगेनारब्धनाशोऽस्तु यावदायुः प्रवर्तते ।
संचितागामिनाशश्च ज्ञानप्रभावहेतुना ॥२१४॥

सामग्रीनाशतस्तस्य ज्ञानिनः सम्भवः कुतः ।
दृश्यते चेत्सुषुप्तादौ लयात्पुनः समुद्भवः ॥२१५॥

दृष्टान्तो न समो दत्तः स बीजाबीजयोर्द्वयोः ।
इन्द्रियाणां लयः स्वप्ने समाधौ बाधते यतः ॥२१६॥

विदित्वा तं भवेन्मुक्तिरात्मबोधादिति श्रुतिः ।
युक्तिर्देशिकवाक्यञ्च प्रमाणमत्र जायते ॥२१७॥

स्वानुभूत्या सुविज्ञाय संशयो नैव विद्यते ।
बन्धो मोक्षश्च तृप्तिश्च स्वेनानुभूयते यतः ॥२१८॥

तटस्था बोधयन्त्याशु शास्त्राणि गुरव स्तथा ।
प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया ॥२१६॥

अतीन्द्रिये यथा स्वर्गे शब्दान्न विद्यते प्रमा ।
शब्दानुसारतोयुक्तिर्ग्राह्यासर्वैर्मुमुक्षुभिः ॥२२०॥

युक्त्या निर्वाचितं तत्त्वं निश्चितं युक्तिवादिना ।
निपुणैरपि दूष्यते युक्तिः स्थितिः कथं कुतः ॥२२१॥

इदं गुह्यं मया प्रोक्तं सर्वशास्त्रमतं त्वयि ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥२२२॥

इति गुरोर्वचः श्रुत्वा शिष्यः सन्मुक्तबन्धनः ।
गुरुवाक्यात्प्रबुद्धः सन् विचरति मृगेन्द्रवत् ॥२२३॥

इति श्रीप्रज्ञानाथकृते ब्रह्मयज्ञे स्वःस्वाहेति तृतीयाहुतिः ॥३॥

ॐ तत्सत् ॥



॥ ओ३म् ॥

# प्रज्ञा-योगः ।



साधु-प्रज्ञानाथ-

प्रणीतः ।



स्था० भास्करप्रयाग

डा० उत्तरकाशी

जि० टेहरी गढ़वाल,

ॐ

# प्रज्ञा-योगः

## भूमिका

संसारसागरं घोरं तर्तुमिच्छन्ति ये नराः ।
प्रज्ञानावं समासाद्य पारं यान्तु सुखेन ते ॥ १ ॥
यदुक्ति भगवान्कृष्णो गीतायां परमं वचः ।
निर्णीतं तन्मया ह्यत्र सुगमेन समासतः ॥ २ ॥
बुद्धियुक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ३ ॥
इत्यादि वाक्यजातेन बुद्धियोगो य ईरितः ।
स एव बुद्धियोगेन प्रज्ञायोगः प्रकाशितः ॥ ४ ॥
प्रज्ञायोगस्य साक्षात्तु साधनं न स्फुटं यतः ।
उच्यते तत्र कृष्णेन तदेवात्र वितन्यते ॥ ५ ॥
गुणदोषौ न मे वा स्तः परवाक्यं वदाम्यहम् ।
श्रमं तु सार्थकं मन्ये यदि कोऽपि सु धारकः ॥ ६ ॥
प्रणम्य श्रीहरिं प्राज्ञं शंकरं लोकशंकरम् ।
प्रज्ञाप्रदर्शनार्थं हि प्रज्ञायोगः प्रणीयते ॥ ७ ॥

इति ग्रन्थकारः ॥

# प्रज्ञायोगे

## प्रथमोल्लासः



सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।
लभ्यते ज्ञानमार्गेण न हठेन लयेन च ॥ १ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
अबुद्धस्तु महामोहात्संसारं प्रतिपद्यते ॥ २ ॥

तत्त्वबोधात्तु योगी स्यान्मूर्खयोगी पतत्यधः ।
योगसिद्धस्त्वतत्त्वज्ञो भयाय जगतः स्मृतः ॥ ३ ॥

सर्पभ्रमे गते पुंसां तन्निमित्तं भयादिकम् ।
न दृश्यते यथा पश्चाद् व्युत्थानेऽपि तथाविदः ॥४॥

मृषात्वेन विनिश्चित्य न योगी विप्रलभ्यते ।
नापि भोगविलासेषु रमन्ते वा कदाचन ॥ ५ ॥

पित्तोपहतचित्तस्य गुडेऽपि तिक्तता क्वचित् ।
प्रतिभासेऽपि तिक्तार्थी न च तं प्रति धावति ॥ ६ ॥

माधुर्यनिश्चयात्तस्य प्रवृत्तिर्बाधते यथा ।
तथात्मज्ञानलाभेन प्रवृत्तिर्नैव जायते ॥ ७ ॥

वसिष्ठादेः कथं शोक इति चेत्संशयस्तव ।
शास्त्राचारमनुष्ठेयं न तु निष्ठीवनादिकम् ॥ ८ ॥
स्वप्रकाशः सदानन्द आत्मा ह्येष स्वरूपतः ।
कामाद्याश्रयता तस्य न भवति कदाचन ॥ ९ ॥
आगामापायिधर्मेण संयुक्तं चित्तमुच्यते ।
विषयसंगतस्तस्य सुखं दुःखं च जायते ॥१०॥
बुद्ध्याद्युपाधियोगेन बन्धनं प्रत्यगात्मनः ।
न च स्वाभाविको ह्येष स्वभावश्चेन्न हीयते ॥११॥
अन्यनिष्ठतया धर्मं यो भासयति चात्मवत् ।
उपाधिः स एव प्रोक्तो बुद्धिरपि तथैव च ॥१२॥
जपाकुसुमयोगेन स्फटिके रक्तिमा यथा ।
तथात्मनि वपुर्धर्मो मृषैव प्रतिभासते ॥१३॥
स्वरूपज्ञानतस्तस्य यदाऽज्ञानं विनश्यति ।
तत्कार्यं मायिकं सर्वं स्वयमेव विलीयते ॥१४॥
नात्मगुणं सुखं दुःखं भास्यत्वाद् घटपीठवत् ।
साक्षिभास्यस्य मिथ्यात्वं स्वप्ने खलु निदर्शनम् ॥१५॥
यद् भास्यं नश्वरं दृश्यं नात्मा जडः स्वयंप्रभः ।
आत्मादि भासकः साक्षी न भास्यः स्यात्कदाचन ॥१६॥
उपाधेर्धर्मसांकर्य्यात्प्रत्यगात्मा प्रपीड्यते ।
तमुपाधिं परित्यज्य स हि पुनर्विमुच्यते ॥१७॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
कालतो वस्तुतो वापि न सत्कदापि वाध्यते ॥१८॥

आत्मनि कल्पितत्वेन तज्ज्ञानाद् वाध्यते जगत् ।
कल्पितस्य च रौप्यस्य शुक्तिज्ञाने यथा त्त्वयः ॥१९॥

सर्वत्रानुगमात्सत्तु कदा कुत्र न वाधते ।
अननुस्यूतं यद्वस्तु व्यभिचारि घटादिवत् ॥२०॥

सद्रूपं स्फुर्त्तिदानेन व्याप्नोति सकलं जगत् ।
सत्तास्फुर्तिं विना वस्तु न किञ्चिदिह विद्यते ॥२१॥

अविनाशि तु तद्विद्धि येनसर्वमिदं ततम् ।
स्वयंज्योतिः प्रकाशात्मा सत्तारूपो न तत्पृथक् ॥२२॥

अज्ञातज्ञापकत्वं हि प्रामाण्यं सर्वसम्मतम् ।
अज्ञातत्वं च देहादेर्नेन्द्रियैः परिच्छिद्यते ॥२३॥

अज्ञातं स्फुरणं तत्र त्वध्यस्तं करणादिकम् ।
भासयति स्वमानेन जडत्वे तु न तद्भवेत् ॥२४॥

अज्ञातं स्फुरणं किन्तु स्वाध्यस्ततमसावृतम् ।
अज्ञानेनावृतं ज्ञानमिति च वदति श्रुतिः ॥२५॥

अविनाशी ह्ययं शुद्धः सच्चिदानन्दरूपकः ।
एकरूपो भवेदात्मा न क्रियया विरूप्यते ॥२६॥

उत्पत्त्याप्तिविकृत्यादिः संस्कृत्यन्यतमक्रिया ।
न खलु युज्यते तस्मिन्नित्यत्वात्कर्मतो न च ॥२७॥

अनित्यस्यैव जन्म स्याद् घटवन्न परात्मनः ।
सर्वगतस्य नाप्यस्त्वं परिच्छिन्नो भवेन्नहि ॥२८॥
स्थाणुवदविकारी च न विक्रियो घटादिवत् ।
अमूर्तत्वादसंस्कार्य आकाशवन्न लिप्यते ॥२९॥
क्रियया निर्मितं यत्तु तदध्रुवं विनिश्चितम् ।
आत्मा चेत्क्रियया लब्धः सोऽपि स्यात्क्षणभंगुरः॥३०॥
अतोहि निष्क्रियं ब्रह्म क्रियया न च लभ्यते ।
योगोऽपि स्यात्क्रिया यस्मात्सोऽपि नालं तदाप्तये॥३१॥
क्रियाकारकता सर्वं चित्तदोषोपशान्तये ।
शुद्धान्तःकरणे प्राप्ते योगक्रिया फलाय न ॥३२॥
अविद्याघातिनः शब्दाद् याहं ब्रह्मेति धीर्भवेत् ।
नश्यत्यविद्यया सार्धं हत्वा रोगं यथौषधम् ॥३३॥
चित्तस्य मलनाशाय योगश्चात्र वितन्यते ।
शुद्धे चेतसि संप्राप्ते बोधः खलूपजायते ॥३४॥
निष्कामकर्मभिः पुंसामन्तःकरणशुद्धितः ।
शमदमादिसम्पन्ने वैराग्यं जायते यदा ॥३५॥
सर्वकर्म परित्यज्य वे.ान्तविषये मतिः ।
जायते भक्तियोगेन तत्त्वज्ञानं ततो भवेत् ॥३६॥
पुरुषकारमाश्रित्य परवैराग्यवान्नरः ।
दैवसम्पत्प्रभावेण वासनामाछुरीं जयेत् ॥३७॥

यदा ते मोहसंभारं बुद्धिर्व्यतितरिष्यति ।
समाधावचला बुद्धिस्तदा योगः स्थिरीभवेत् ॥३८॥
समाधिर्द्विविधः प्रोक्तो लयश्च बाध एव च ।
लयः पतंजलिप्रोक्तो बाधो वेदान्तवादिभिः ॥३६॥
लयादुत्तिष्ठते चित्तं बाधे चित्तं न लीयते ।
कार्यकारणभावेन मनः खलु विलीयते ॥४०॥
कारणाद्भिन्नकार्यस्य सत्ता न विद्यते क्वचित् ।
पंचीकरणतः कार्यं कारणे प्रविलापयेत् ॥४१॥
पंचभूतात्मकं सर्वं विराजि प्रविलापयेत् ।
समष्टिरूपविश्वात्मा व्यष्टितो न विभिद्यते ॥४२॥
पंचीकृतसमष्ट्यापि नापंचीकृतमेव च ।
तत्र गंधवती पृथ्वी तद्गुणान्नहि भिद्यते ॥४३॥
ताश्चापराश्चतुर्गुणा आपो गंधरसेतराः ।
तेजःकार्यवशात्तेषां तद्व्यतिरेकता न च ॥४४॥
वायुकार्यवशात्तस्य न तद्भिन्ने प्रमा क्वचित् ।
द्विगुणात्मकवायुस्तु तथाकाशान्न भिद्यते ॥४५॥
शब्दगुणस्तथाकाशो बहुस्यामितिशब्दतः ।
समष्ट्यहंकृतेः पूर्वान्न पृथक् परिदृश्यते ॥४६॥
ईक्षणरूपमज्ञानं नाहंकारात्प्रभिद्यते ।
सापि माया जडत्वेन चाध्यस्तत्वान्न भिद्यते ॥४७॥

इत्यनेन सकार्यस्य चैतन्यैकरसे शिवे ।
यल्लयादेकता प्रोक्ता समाधिर्योगवित्तमैः ॥ ४८ ॥
न सोऽपि फलदः सम्यक् महावाक्यार्थहीनतः ।
अज्ञान-विद्यमानत्वात्प्रपंचोद्भवसम्भवः ॥ ४९ ॥
सुषुप्तिवत्सबीजोऽसौ मुक्तिदः स न योगिनाम् ।
तत्त्वमस्यादिवाक्येनचार्थसाक्षात्कृतेन च ॥ ५० ॥
सर्गक्रमेण कायणां निवृत्तौ कारणैः सह ।
पुनरुत्थानहीनत्वान्निर्बीजो बाधपूर्वकः ॥ ५१ ॥
स समाधिर्भवेदस्मान्नेतरादसनादिभिः ।
लयव्युत्थानहीनत्वाद्योगिनां मोक्षदायकः ॥ ५२ ॥
समाधौ विषयाभावाद् व्युत्थाने बाधनिश्चयात् ।
न बाह्यविषयात्तस्य सुखप्राप्तिसमुद्भवः ॥ ५३ ॥
प्रथमो वृत्तिरोधेन द्वितीयस्तु विचारतः ।
समाधिर्द्विविधः प्रोक्तो योगिनामनुशक्तितः ॥ ५४ ॥
वृत्तयः पंचतय्याः स्युः प्रमाणादिप्रकीर्तिताः ।
सर्वासां चित्तवृत्तीनां निरोधो योग उच्यते ॥ ५५ ॥
प्रमाणानि षडेतानि प्रत्यक्षादिर्विदुर्बुधाः ।
विपर्ययो मृषा ज्ञानं पंच तस्य भिदाः स्मृताः ॥ ५६ ॥
अविद्या चास्मिता रागो द्वेषाभिनिवेशस्तथा ।
प्रमा भ्रमविलक्षणा ह्यसदर्थफला तु या ॥ ५७ ॥

अभावज्ञानसंश्लिष्टा वृत्तिर्निद्रेति कथ्यते ।
सर्वा वृत्तिर्निरोद्धव्या न चेत्तु न समाधयः ॥ ५८ ॥

आरुरुक्षोर्मुनेर्योगः पुरुषार्थेन वै भवेत् ।
असंयतात्मना योगो दुष्प्राप्य इति मे मतिः ॥ ५९ ॥

सर्वेन्द्रियानिरोधेन वृत्तिरोधः सुदुर्लभः ।
असंयतात्मनः पुंसः प्रयासाय योगः स्मृतः ॥ ६० ॥

इन्द्रियेषु च सर्वेषु वागुपस्थौ महाबलौ ।
आदौ तयोर्जये यत्नं कुर्याद्योगी विशेषतः ॥ ६१ ॥

विषये दोषदर्शनं तयोर्जये सुकौशलम् ।
भोगेन न भवेद्वश्यौ भवतस्तौ समाशतैः ॥ ६२ ॥

यावन्न तौ जितौ सम्यक् समाधिं तावन्नाचर ।
यथाशक्ति च मन्त्रादौ यतस्व श्रद्धया सह ॥ ६३ ॥

गायत्री जपमन्त्रादौ चेष्टस्व गुरुसेवया ।
दोषत्रयेण वै चित्तं चलति क्षिप्तवायुवत् ॥ ६४ ॥

मलावरणविक्षेपास्त्रिविधाः परिकीर्तिताः ।
गुरुशुश्रूषया पूर्वं मलदोषं निवारयेत् ॥
विक्षेपं तु विचारेण ह्यावरणं समाधिना ॥ ६५ ॥

एकाकी निर्जने स्थाने मनोरमे नदीतटे ।
गुहाकन्दरमाश्रित्य निराशीरपरिग्रहः ॥
युंजीत सततं योगी स्वस्वरूपमहर्निशम् ॥ ६६ ॥

न किमवसरं दद्यात्कामादीनां मनागपि ।
विविक्ते योगिनां सिद्धिःकामुकानां महद्भयम् ॥ ६७ ॥

असंयमी कदा कोऽपि नैकाकी निर्जने वसेत् ।
मुक्तिकारणमेकान्तं यतीनामूर्ध्वरेतसाम् ॥ ६८ ॥

विचारविहीनानां तु कामरिपुविवर्धकम् ।
आसनं स्यात्सुखं स्थिरं कम्बलं वा कुशाजिनम्॥६९॥

अपीडके सुखं स्वस्थो वसेद्योगी स्थिरोऽचलः ।
नासिकाग्रं स्वमवेद्य समकायशिरोग्रीवः ॥ ७० ॥

जिह्वया तालुमाकृष्य तिष्ठेत्तां योगधारणाम् ।
विषयाकारमुत्सृज्य क्रमाद्ध्येयैकगोचरम् ॥ ७१ ॥

चित्तस्य यदवस्थानं संप्रज्ञातः स उच्यते ।
कामुको वा यथा नारीं लोभी वा भोजनादिकम् ॥७२॥

पश्येत्तथैव यच्चित्तं तत्समाधौ विधीयते ।
विषयान्तरमुत्सृज्य भावे चित्तं निवेशनात् ॥ ७३ ॥

लक्ष्ये स्थिरं यदा चित्तं संप्रज्ञातः स उच्यते ।
त्रिपुटीसहितो ह्येष ग्राह्यादिस्त्रिविधः स्मृतः ॥ ७४ ॥

ग्राह्यस्तुद्विविधः प्रोक्तः स्थूलसूक्ष्मविभेदतः ।
जपास्फटिकयोर्योगे रक्तिमा स्फटिके यथा ॥ ७५ ॥

तथैव निर्मलं चित्तं भावनीयस्य भावनात् ।
तद्रूपभवनं तस्य समापत्तिरुदाहृता ॥ ७६ ॥

ग्राह्यग्राहकभावेन समाधिर्जायते त्रिधा ।
प्रथमं ग्राह्यनिष्ठः स्यात्ततो ग्रहणनिष्ठकः ॥ ७७ ॥

ततो ग्रहीतृनिष्ठश्च क्रमाद्योगी समभ्यसेत् ।
क्रमात्स्थूलात्सुसूक्ष्मे च योगी योगं समाचरेत् ॥ ७८ ॥

महाभूतेन्द्रियाण्यादौ संयम्य षोडशात्मके ।
विषयांस्तत आदाय समाधिं प्राक् समभ्यसेत् ॥ ७९ ॥

पूर्वापरानुसंधानाच्छब्दार्थोल्लेखपूर्वकम् ।
भावना क्रियते यावत्सवितर्कस्तदा स्मृतः ॥ ८० ॥

अस्मिन्नेव समालम्बे पूर्वापरानुचिन्तने ।
शब्दार्थोल्लेखशून्यत्वे निर्वितर्कः प्रवर्तते ॥ ८१ ॥

तन्मात्रलक्षणं चित्तमालम्ब्य सूक्ष्मतन्मयम् ।
देशकालावच्छेदेन यदा चिन्ता प्रवर्तते ॥ ८२ ॥

सविचारः समाधिः स्याद् ध्यानाभ्यासप्रकर्षतः ।
अवच्छेदं विना धर्मे निर्विचारः प्रवर्तते ॥ ८३ ॥

क्षीणरजस्तमोयुक्तमेकाग्रं मानसं यदा ।
सत्त्वोद्रेकात्समाधिः स्यात्सानन्द इति नामकः ॥ ८४ ॥

अस्मिन्नेव समाधौ यो बद्धस्तत्त्वं न पश्यति ।
देहाहंकारहीनः स विदेह इति कथ्यते ॥ ८५ ॥

रजस्तमोऽनसंयुक्तः शुद्धसत्त्वसमाश्रयः ।
सस्मितः सहि संप्रोक्तः समाधिः प्रकतौ लये ॥ ८६ ॥

अस्मिन्नेव कृतार्था ये लीयन्ते प्रकृतौ ध्रुवम् ।
तत्र पुरुषमाश्रित्य ग्रहीतृयोगमाचरेत् ॥ ८७ ॥
सविचारो वितर्कश्च सानन्दः सस्मितस्तथा ।
समाधिरन्तर्धानादि सिद्धिहेतुतया स्मृतः ॥८८॥
मुक्तिहेतुसमाधेस्तु यतोऽयं विघ्नकारकः ।
हेय एव मुमुक्षूणां ग्रहीतृग्रहणावपि ॥८९॥
ग्राह्यसमाधयोर्मध्ये तयोरन्तःप्रवेशनात् ।
सूक्ष्मविषयमेतेषां तन्मात्रं प्रकृतिस्तथा ॥९०॥
स्थूलेऽर्थे सवितर्कः स्यात्सूक्ष्मे विचार ईरितः ।
अन्तिमस्य फलं वक्ति योगशास्त्रे पतंजलिः ॥९१॥
निर्विचारप्रकर्षेण प्रसादोऽध्यात्म जायते ।
वासनामुक्तचित्तस्य प्रज्ञालोकः प्रसूयते ॥९२॥
ऋतंभरा भवेत्प्रज्ञा विपर्ययनिरोधिका ।
सत्यमेव विभर्ति ~~श्र~~या सा हि ऋतम्भरा स्मृता ॥९३॥
आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥९४॥
सा तु श्रुतानुमानाभ्यां विशेषा न च लौकिका ।
स्थूलं सूक्ष्मं पदार्थश्च यया सत्यात्प्रतीयते ॥९५॥
तस्यां स्थितः समाधिस्थो दूरं चान्तिकमेव च ।
जानाति ध्यानयोगेन वक्ति योगी पतंजलिः ॥९६॥

प्रज्ञालोकप्रभावेण संस्काराः प्रभवन्ति न ।
नवसंस्कारप्राबल्याद् दृश्यतेऽभीष्टदेवता ॥९७॥
संप्रज्ञातसमाधौ हि निद्रावृत्तिसमाश्रये ।
स्वप्नवद्दर्शनं तत्र पूर्वसंस्कारतो भवेत् ॥९८॥
सबीजस्य निरोधेन निर्बीजो द्राक्प्रजायते ।
समाधिजातसंस्कारस्तत्र विलीयते पुनः ॥९९॥
विरामप्रत्ययाभ्यासात्संस्कारपरिशेषतः ।
परवैराग्यलब्धश्च समाधिः परमः स्मृतः ॥१००॥
द्विविधो विद्यते मार्गो वैराग्योऽभ्यास एव च ।
आलम्बेऽभ्यासमात्रं स्यान्निरालम्बे विरागता ॥१०१॥
भवप्रत्यय उपायः समाधिर्द्विविधः पुनः ।
विदेहः प्रकृतौ लीने भवप्रत्यय उच्यते ॥१०२॥
आत्मानात्मविचारेण शमादिसाधनैः सह ।
विवेकिनां भवेद्यस्तु स उपायः प्रकीर्तितः ॥१०३॥
निरिन्धनो यथा वह्निः स्वयमेवोपशाम्यति ।
योगाभ्यासात्तथा चित्तं सवृत्त्या प्रशमं व्रजेत् ॥१०४॥
औषधिमन्त्रयोगेन हठयोगेन वा पुनः ।
यः समाधिर्न मोक्षाय पुनर्जन्मकरो यतः ॥१०५॥
समाधिपरिपाकेन वेदान्तवाक्यजन्यजः ।
सम्यग्दर्शनयोगेन समाधिर्मोक्षदः स्मृतः ॥१०६॥

ज्ञानेनाज्ञानकार्यस्य स्वमूलस्य लयं यदा ।
पुरुषस्य तदा शुद्धे पदे स्थितिर्निरङ्कुशा ॥१०७॥
निर्मुक्तः पुरुषो बंधैः केवलो मुक्त उच्यते ।
विशोका नाम सिद्धिस्तु सर्वज्ञातृत्वलक्षणा ॥१०८॥
आविर्भवति सा चास्य कैवल्यपथरोधिका ।
वैराग्येण दृढास्त्रेण निकृन्तन्तं निकृन्तत ॥१०९॥
क्लेशकर्मनिवृत्तिर्हि कैवल्यस्थितिरुच्यते ।
निरोधः सर्ववृत्तीनां समाधौ यत्र जायते ॥११०॥
निर्मलं शाश्वतं सुखं क्षीणे चेतसि लभ्यते ।

इति प्रथमोच्छ्वासः ॥ १ ॥



## द्वितीयोल्लासः

### मनोनाशः

---

लोभेनाधिकभोक्तृणां न योगोऽस्ति कदाचन ।
अजीर्णव्याधिदोषेण पीडितस्य सुखं कुतः ॥ १ ॥

अनाहारादशेषाद्वा पोषणाभावहेतुतः ।
शक्तिहीनप्रयत्नानां न योगे कृतकार्यता ॥ २ ॥

पूरयेदशनेनार्धं तृतीयमुदकेन च ।
वायोः सञ्चरणार्थञ्च चतुर्थमवशेषयेत् ॥ ३ ॥

अनिद्रस्य तथैवापि चातिनिद्रस्य वा पुनः ।
योगो नैवास्ति वै तस्य ततस्तदुभयं त्यजेत् ॥ ४ ॥

क्षुधितः पीडितः श्रान्तो निद्रितो भयविह्वलः ।
योगी योगं न युञ्जीत प्रतीकारं समाचरेत् ॥ ५ ॥

नाति शीते न चैवोष्णे न द्वन्द्वे नानिलान्विते ।
कालेष्वेतेषु युञ्जीत ध्यानं वा योगमेव वा ॥ ६ ॥

योगिनो युक्तचेष्टस्य योगो भवति दुःखहा ।
साधनपाटवात्तस्य समाधौ निश्चला मतिः ॥ ७ ॥

योजनान्न परं गच्छेद्योगी योगपरायणः ।
विरमूत्रभैद्यमात्रेभ्यो नान्यथा स्वेच्छगो भवेत् ॥ ८ ॥
न वाणीचपलो योगी नेन्द्रियश्चपलस्तथा ।
बहुभ्रमी च भाषी च योगसिद्धिं न विन्दति ॥ ९ ॥
रात्रेर्भागत्रयं कृत्वा प्रारम्भान्ते प्रजागरम् ।
मध्ये तु स्वपनं कुर्यात्ततो योगः प्रसीदति ॥१०॥
कामेन चंचलं चित्तमकामेन स्थिरीकुरु ।
कामात्प्रवर्तते खानि निष्कामेन नियम्यते ॥११॥
शनैः शनैर्वशं कुर्यादिन्द्रियाणि मनस्तथा ।
त्वरया कार्यहानिः स्यान्नोद्विग्नतां समाचरेत् ॥१२॥
अद्य वाऽब्दशतैर्वापि योगसिद्धिं लभेत्खलु ।
इति निश्चित्य युञ्जीत नोदासीनमना भवेत् ॥१३॥
पूर्वजन्मार्जितैर्योगैः केषांचिद् द्राक् शुभं फलम् ।
तं दृष्ट्वा हठकारेण तत्समं न समाचरेत् ॥१४॥
भोजनं साधनं तृप्तिः सर्वेषां स्यात्पृथक् पृथक् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥१५॥
यच्छेद्वाङ्मनसी योगी तद्यच्छेज्ज्ञानमात्मनि ।
ज्ञानमात्मनि संदध्यात्तद्यच्छेच्छान्तमात्मनि ॥१६॥
नानुध्यायेद्बहूञ्छब्दान् लौकिकं वैदिकं तथा ।
वाचो विग्लापनं यस्मान्मृषा वाक्यं सदा त्यजेत् ॥१७॥

मनोवृत्तिं समाश्रित्य वाग्वृत्तेर्निरोधं कुरु ।
चक्षुःकर्णनिरोधेन मनो द्राग्वशमेष्यति ॥१८॥

शोभनं सुमठं कुर्यान्निर्जने निर्मले स्थले ।
मत्कुणैर्मशकैर्वापि वर्जिते च यथाविधि ॥१९॥

सोऽहमिति महामन्त्रं प्राणायामे सदा जपेत् ।
अजपा नाम गायत्री नादश्रवणहेतुकी ॥२०॥

श्वासेन सो विचिन्त्यैव प्रश्वासे हँ विरेचयेत् ।
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ॥२१॥

प्रणवस्य ध्वनिस्तद्वत्तदग्रं ब्रह्म चोच्यते ।
ज्योतिर्मयं तदग्रं स्यादवाच्यं बुद्धितः परम् ॥२२॥

मनसि चंचले ध्यानं न कुर्याद्योगतत्त्ववित् ।
प्राणानिलं समीक्ष्य स्वं गायत्रीमजपां जपेत् ॥२३॥

शाम्ये चित्ते स्थिरे शान्ते मन्त्रलक्ष्यं विचिन्तयेत् ।
सः शब्देन परं ब्रह्म हं शब्दाज्जीव उच्यते ॥२४॥

उपाधिमुभयोस्त्यक्त्वा लक्ष्यार्थे चैकतां स्मरेत् ।
हं कारेण वहिर्याति सःकारेण विशेत्पुनः ॥२५॥

हंसः सोऽहमिति प्राज्ञो मंत्रं जपति सर्वदा ।
षट् शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ॥२६॥

एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ।
कोटया च जप एवैष नादस्ततः प्रसूयते ॥२७॥

श्रुते नादे जपं त्यक्त्वा नादे मनो निवेशयेत् ।
अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः ॥२८॥
ध्वनेरन्तर्गतं ज्योतिर्ज्योतिषोऽन्तर्गतं मनः ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥२९॥
एष यत्नः सदा कार्यो यावच्चित्तं क्षयं गतम् ।
अजपा नाम गायत्री योगिनां मोक्षदा सदा ॥३०॥
अभ्यासेनैव यत्नेन सर्वपापैः प्रमुच्यते ।
अभ्यासेन विशुद्धात्मा सोऽहमिति च शब्दतः ॥३१॥
बुध्यति गुरुवाक्येन सुषुप्तेर्बोधितो यथा ।
ध्वस्तेऽतो ज्ञानतोऽज्ञाने सोऽहमिति भवेत्फलम् ॥३२॥
अविद्याघातिनः शब्दादहं ब्रह्मेतिधीर्भवेत् ।
सतां संगः शुभं शास्त्रं विचारो नियमादयः ॥३३॥
अभ्यासे साधकाः सर्वे व्योत्क्रमेण व्यतिक्रमः ।
अपितु यममातिष्ठेत्सर्वदा सावधानतः ॥३४॥
तत्रापि सत्यमातिष्ठेद् ब्रह्मचर्यं विशेषतः ।
चक्षुरादीन्द्रियैर्ग्राह्यं दृष्टं श्रुतं धृतं च यत् ॥३५॥
तस्यैवोक्तिर्भवेत्सत्यं नान्यथा परिजल्पितम् ।
सर्वसत्यं परं ब्रह्म न चान्यदिति या मतिः ॥३६॥
तच्च सत्यं परं प्रोक्तं त्रिकालाऽव्यभिचारतः ।
दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ॥३७॥

संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः ॥३८॥
विपरीतो वटोर्धर्मो स्वनुष्ठेयो मुमुक्षुभिः ।
ब्रह्मभावे मनश्चारं ब्रह्मचर्यं प्रकीर्तितम् ॥३९॥
स्वभार्यायै ऋतौ दानं गृहिना च विकल्पितम् ।
प्रथमाभ्यासकाले तु शस्तं क्षीराज्यभोजनम् ॥४०॥
गोधूममुद्गशाल्यन्नं योगवृद्धिकरं स्मृतम् ।
सत्त्वशुद्धिं विना न स्यात्समाधिर्यत्नं कुर्वताम् ॥४१॥
आहारशुद्धिमन्येन सत्त्वशुद्धिर्भवेन्नहि ।
अमेध्यं गत-यामान्नं पूतिगन्धमयं च यत् ॥४२॥
नाश्नीयाद्योगविद्योगी द्वि-भोजनं सुरां तथा ।
तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् ॥४३॥
मुमुक्षुर्न त्यजेद् योगी शरीरशुद्धिहेतवे ।
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥४४॥
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
अनुद्वेगकरं वाक्यं सत्यं प्रियं हितं च यत् ॥४५॥
स्वाध्यायाभ्यासनं चैव वाचिकं तप उच्यते ।
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥४६॥
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।
शारीरेण मलं त्यक्त्वा वाचिकेन च विक्षेपम् ॥४७॥

मनसाऽऽवरणं त्यक्त्वा सर्वदोषैर्विमुच्यते ।
मेघात्यये यथा भानुः स्वयमेव प्रकाशते ॥४८॥
चित्तमले गते चात्मा तथैव स्वं प्रकाशते ।
श्रद्धाहीनस्य मूर्खस्य न योगे स्यात्कृतार्थता ॥४६॥
आस्तिक्यबुद्धिमान्योगी वेदोक्तं च समाचरेत् ।
गुरुशास्त्रे दृढा निष्ठा श्रद्धेति संप्रकीर्तिता ॥५०॥
श्रौते स्मार्ते च विश्वासो यस्तदास्तिक्यमुच्यते ।
नाभेस्तिर्यगथोर्ध्वतः कुण्डलिनी व्यवस्थिता ॥५१॥
परितः कन्दपार्श्वे तु सुषुम्ना द्वाररोधिनी ।
मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं भृशम् ॥५२॥
स्वपिति योगनिद्रायां कन्दं संवेष्ठय चाष्टधा ।
योगकाले यतीनां तु योगजेन च वह्निना ॥५३॥
बोधिता स्फुरिता साध्वी हृदाकाशे विराजते ।
कुण्डलिनीं समुत्थाप्य योगक्रियां समाचरेत् ॥५४॥
अन्यथा विघ्नबाहुल्याद्योगो न फलदो भवेत् ।
तस्या जागरणे चास्ति द्विविधं साधनं नृणाम् ॥५५॥
एकं गुरुप्रसादेन द्वितीयं स्वप्रयत्नतः ।
तपसा ब्रह्मचर्येण सा जागर्ति शनैः शनैः ॥५६॥
प्राणायामात्तथा ध्यानात्सर्वतो ब्रह्मदर्शनात् ।
गुरुणा बोधिता सा तु प्रयत्ने शिथिलीकृते ॥५७॥

पुनर्निद्राति प्रागेव विषयानिलतर्पणात् ।
वसन्तानिलयोगेन यथा निद्रा प्रवर्तते ॥५८॥
विषयानिलवातेन तथा स्वपिति कुण्डली ।
दीर्घकालमविच्छिन्नं दृढसत्कारसेवनात् ॥५९॥
चिरजाग्रद्भवेत्तस्या योगेना क्षीणचेतसाम् ।
शरीरलघुतादीप्तिर्वह्नेर्जठरवर्तिनः ॥६०॥
नादाभिव्यक्तिरित्येते लिंगा प्रबोधसूचकाः ।
यावदेतान्समापश्येत्तावद्योगं समभ्यसेत् ॥६१॥
अन्यथा योगक्रिया तु प्रयासाय न सिद्धिदा ।

## कुण्डलिनीजागरणोपायः ।

प्राणरोधादथाभ्यासादृज्वी कुण्डलिनी भवेत् ।
अन्योपायं वदाम्यत्र मुमुक्षूणां हिताय च ॥६२॥
द्वादशाङ्गुलदैर्घ्यं च वसनं चतुरङ्गुलम् ।
विस्तीर्य तेन स्वां नाभिं वेष्टयित्वा ततः सुधीः ॥६३॥
अङ्गुष्ठतर्जनीभ्यां तु हस्ताभ्यां धारयेद् दृढम् ।
स्वशक्त्याचालयेद्वामे दक्षिणे च पुनः पुनः ॥६४॥
मुहूर्तद्वयपर्यन्तं निर्भयाच्चालयेद् भृशम् ।
ऊर्ध्वमाकर्षयेत्किञ्चित्सुषुम्नां कुण्डलीगताम् ॥६५॥
कुर्यादनन्तरं भस्त्रीं कुण्डलिनीविबोधिनीम् ।

कुण्डलिनीं प्रबोध्याशु प्रत्यहं योगमाचरेत् ॥६६॥
अन्यथा निद्राविक्षेपाद्योगो न सुलभो भवेत् ।

## प्रत्याहारः ।

विषयेषु निमग्नानामिन्द्रियाणां स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः प्रकीर्तितः ॥६७॥
यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति चिन्तयेत् ॥६८॥
एवंज्ञानेन्द्रियाणां तु विषयेभ्यः प्रतिक्रिया ।
याममात्रं दिवा रात्रं कुर्याद्योगी ह्यतन्द्रितः ॥६९॥

## श्रुतिविहिताधारणा ।

पादाग्राज्जानुपर्यन्तं पृथिवीस्थानमुच्यते ।
पृथिवी चतुरस्रञ्च पीतवर्णं लवर्णकम् ॥७०॥
पार्थिवे वायुमारोप्य लकारेण समन्वितम् ।
ध्यायँश्चतुर्भुजाकारं चतुर्वक्त्रं हिरण्मयम् ॥७१॥
धारयेत्पंचघटिकाः पृथिवीजयमाप्नुयात् ।
आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ॥७२॥
आपोऽर्धचन्द्रं शुक्लं च वबीजं परिकीर्तितम् ।
वारुणे वायुमारोप्य वकारेण समन्वितम् ॥७३॥

स्मरन्नारायणं देवं चतुर्बाहुकिरीटिनम् ।
शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।।७४।।
धारयेत्पंचघटिकाः सर्वपापैः प्रमुच्यते ।
आपायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ।।७५।।
वह्निस्त्रिकोणं रक्तं च रेफाक्षरसमुद्भवम् ।
वह्नौ चानिलमारोप्य रेफाक्षरसमुज्ज्वलम् ।।७६।।
त्र्यक्षं च वरदं रुद्रं तरुणादित्यसन्निभम् ।
भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ।।७७।।
धारयेत्पंचघटिकां वह्निनासौ न दह्यते ।
आहृदयाद्भ्रुवोर्मध्यं वायुस्थानं प्रकीर्तितम् ।।७८।।
वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ।
धारयेत्तत्र सर्वज्ञमीश्वरं विश्वतोमुखम् ।।७९।।
धारयेत्पंच घटिकां वायुवद्व्योमगो भवेत् ।
मरणं न तु वायोस्तु भयं भवति योगिनः ।।८०।।
आभ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ।
व्योमवृत्तं च धूम्रं च हकाराक्षरभासुरम् ।।८१।।
आकाशे वायुमारोप्य हकारोपरि शंकरम् ।
विन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ।।८२।।
आकाशधारणात्तस्य खेचरत्वं भवेद् ध्रुवम् ।
यत्र त्र स्थितो वापि सुखमत्यन्तमश्नुते ।।८३।।

एवं च धारणाः पञ्च कुर्याद्योगी विचक्षणः ।
ततो दृढशरीरः स्यान्मृत्युस्तस्य न विद्यते ॥८४॥

## ध्यानम्

बद्ध्वा योगासनं पूर्वं हृद्देशे हृदयांजलिः ।
दन्तैर्दन्तानसंस्पृश्य ऋजुकायः समाहितः ॥८५॥
नासाग्रन्यस्तदृग्भूत्वा जिह्वां कृत्वा च तालुनि।
संयम्य चेन्द्रियग्रामं बुद्ध्या धृत्या विशुद्धया ॥८६॥
हृत्पुण्डरीकमध्यस्थं भावयेत्परमेश्वरम् ।
साक्षिणं बुद्धिनृत्यस्य परमप्रेमगोचरम् ॥८७॥
अगोचरं मनोवाचां सुसूक्ष्मं भावनातिगम् ।
सत्तामात्रं स्वयं भातमखण्डं सर्वतोमुखम् ॥८८॥
नित्यं शुद्धं चिदानन्दं सत्यं शान्तं सुखास्पदम् ।
आत्मानं सोऽहमस्मीति भावेन हृदि भावयेत् ॥८९॥
पंचभूतात्मकं सर्वं तन्मात्रान्न पृथक् स्थितम् ।
इति वचिन्त्य तत्सर्वं तन्मात्रे संविलापयेत् ॥९०॥
तन्मात्राविषयांस्त्यक्त्वा न कुत्राप्यनुभूयते ।
इति ध्यात्वा च तत्पश्चात् विषये प्रविलापयेत् ॥९१॥
विषयाणि मनो हित्वा न स्थितानि स्वयं क्वचित् ।
मनोमात्रमिदं सर्वं यत्किंचित्सचराचरम् ॥९२॥

मनसः स्फूर्तिमात्रेण यस्यान्वयः सदैव हि।
मनसः सोऽपि नान्यः स्यादिति विद्धि प्रमाणतः ॥६३॥
मनोऽपि सच्चिदानन्दे नवस्तु परमार्थतः।
अद्वैतमद्वितीयञ्च शुद्धं वस्तु स्वयं यतः ॥६४॥
अनेन कार्यजातस्य कारणे प्रविलापने।
ध्यानाभ्यासप्रकर्षेण समाधिर्जायते ध्रुवः ॥६५॥
समाधिः पूर्वमेवोक्तः समासेन प्रधानतः।
समाधिः समतावस्था जीवात्मपरमात्मनोः ॥६६॥
अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥६७॥
उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः।
समाधिं सर्वदा कुर्यात् हृदये वाऽथवा बहिः ॥६८॥
सविकल्पो निरालम्बः समाधिर्द्विविधः स्मृतः।
दृश्यशब्दानुभेदेन सविकल्पः पुनर्द्विधा ॥६९॥
कामादिश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥१००॥
असंगसच्चिदानन्दः स्वप्रभो द्वैतवर्जितः।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥१०१॥
स्वानुभूतिरसावेशाद् दृश्यशब्दाद्यपेक्षितुः।
निर्विकल्पः समाधिः स्याद्ध्यानाभ्यासप्रकर्षतः॥१०२॥

स्तब्धीभावो रसास्वादः शून्यतालयविक्षेपाः ।
समाधिनाशकाः प्रोक्तास्त्याज्या योगविशारदैः॥१०३॥

लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्स्तब्धीभावं न संरमेत् ॥१०४॥

शून्यवृत्त्या हि शून्यत्वं सानन्दं भानवृत्तितः ।
सोऽहं वृत्त्या हि पूर्णत्वं क्रमेण प्रथमं त्यजेत् ॥१०५॥

॥ इति द्वितीयोच्छ्वासः ॥

# तृतीयोच्छ्वासः

## वासनाक्षयः

दृढभावनया त्यक्त्वा पूर्वापरविचारणाम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ १ ॥
शुद्धा चाशुद्धाभेदेन द्विविधा वासना स्मृता ।
अशुद्धा कामसंकल्पा शुद्धा कामविवर्जिता ॥ २ ॥
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्रादिवासनाः पूर्वं गृहाणामलवासनाः ॥ ३ ॥
ता अप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ॥ ४ ॥
तामप्यथ परित्यज्य मनो बुद्धिसमन्विताम् ।
शेषस्थिरः समाधानो भवेद्योगी स्थिरो दृढः ॥ ५ ॥
असङ्गव्यवहारत्वाद्भवभावनावर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ॥ ६ ॥
अध्यात्म-शास्त्रमन्त्रेण तृष्णाविषतडिल्लता ।
क्षीयते भावितेनान्तः शरदा मिहिका यथा ॥ ७ ॥
सर्वत्र सर्वतः सर्वं ब्रह्ममात्रावलोकनात् ।
सद्भावभावनादार्ढ्याद्वासनाक्षयमश्नुते ॥ ८ ॥

वासनाक्षयविज्ञानमनोनाशाः समं यदा ।
चिराभ्यस्ता भवेयुस्ते भवन्ति मोक्षदाः सदा ॥ ९ ॥
इदं सर्वं जगत् कृत्स्नमद्वितीये चिदात्मनि ।
मायया कल्पितं सर्वं मृषाऽपि सत्प्रतीयते ॥१०॥
परमार्थे न सद्वस्तु सच्चिदानन्दरूपकम् ।
अहमेव परं तत्वं सदहमिति निश्चितम् ॥११॥
प्रदीपज्वालसंकाशं वृत्तिसन्तानवद् दृढम् ।
अन्तःकरणवस्तु हि मननान्मन उच्यते ॥१२॥
वृत्तिरूपं परित्यज्य यदा स्थास्यति निश्चला ।
सर्ववृत्तिनिरोधेन मनोनाशो भविष्यति ॥१३॥
सहसोत्पद्यमानानां क्रोधादीनां विशेषतः ।
प्राक्संस्कारवशाच्चित्ते पूर्वाभ्यासेन जायते ॥१४॥
विवेकभेषजात्तस्य मन्त्रेण सर्पबाधवत् ।
सत्यपि कारणे बाह्ये क्रोधादिर्नोपजायते ॥१५॥
तत्वज्ञानान्मृषाभूते प्रपंचे भुवि वस्तुनि ।
नरविषाणसंकाशं दृश्यते सकलं यदा ॥१६॥
बुद्धिवृत्तेरनूत्थानात्पुनर्वृत्तेरयोगतः ।
निरिन्धनवदेवाग्निर्मनो ह्याशुर्विनश्यति ॥१७॥
मनसि विलये शीघ्रं संस्काराः पूर्ववद्दृढम् ।
नोत्पद्यन्ते यथा पूर्वं व्यवहारेऽपि योगिनः ॥१८॥

मनोनाशाद्धवेद्यस्य मूलेन वासनाक्षयः ।
स्थितप्रज्ञो भवत्यत्र स यतिर्नात्र संशयः ॥१६॥

शमदमादिभिः पुंसस्तत्त्वज्ञानं यदा भवेत् ।
कामक्रोधादिसंत्यागाद्रागद्वेषौ न तिष्ठतः ॥२०॥

क्षीणायाश्च मनोवृत्तौ प्रतिबन्धविदूरिते ।
वासनाक्षयतश्चित्ते तत्त्वज्ञानं प्रकाशते ॥२१॥

कृतोपास्ति न वै तादृग्योगिनो द्विविधाः स्मृताः ।
उपास्य दर्शनाद्ये तु तत्त्वज्ञानाय निष्ठिताः ॥२२॥

ज्ञानोदयान्मनोनाशात्तेषां शान्तिः करे गता ।
अकृतोपासकानां तु साधने यततामपि ॥२३॥

योगं विना निजानन्दो न क्वचिदधिगम्यते ।
प्राक्-संस्कारवशाच्चित्ते वासनावशतो नृणाम् ॥२४॥

जायंते विविधा भावाः पृथक् पृथक् शरीरिणाम् ।
शुद्धाशुद्धप्रभेदेन वासनाः पूर्ववर्णिताः ॥२५॥

तत्त्वज्ञानप्रदा या तु सा शुद्धा परिकीर्तिता ।
शास्त्रसंस्कारनैपुण्याज्जायते देवसंपदा ॥२६॥

एकरूपा भवेदेषा मोक्षदा योगिनां सदा ।
मलिना द्विविधा प्रोक्ता बाह्याभ्यान्तरभेदतः ॥२७॥

बाह्या तु त्रिविधा ज्ञेया लोकशास्त्रशरीरतः ।
जना यथा न द्विष्येयुस्तथा मे कार्यमेव हि ॥२८॥

इत्यभिनिश्चयः पुंसां वासना लौकिकी स्मृता ।
लोकानुरञ्जने को वा समर्थो धरणीतले ॥२९॥
इति न्यायादशक्यत्वात्पुरुषार्थो न युज्यते ।
शास्त्रीयवासना त्रिधा पाठार्थोच्चारणक्रमात् ॥३०॥
भारद्वाजस्य पाठस्तु दुर्वाससोऽर्थ एव च ।
अनुष्ठानं निदाघस्य शास्त्रेषु परिगीयते ॥३१॥
क्लेशदर्पकरत्वात्तु त्याज्याह्येषा मुमुक्षुभिः ।
शारीरवासना पुंसां त्रिविधा परिकीर्तिता ॥३२॥
आत्मत्वगुणधानत्वदोषापनयनं तथा ।
आत्मत्वभ्रमदेहेषु विरोचनादिषु श्रुता ॥३३॥
शास्त्रीयं लौकिकं चेति गुणाधानं पुनर्द्विधा ।
शब्ददानं समीचीनं लौकिकं परिकीर्तितम् ॥३४॥
शास्त्रीयं तीर्थयात्रादि सम्पादनं विदुर्बुधा ।
दोषापनयनं तद्वच्छास्त्रीयं लौकिकं तथा ॥३५॥
औषधादिप्रदानेन लौकिकं दोषमार्जनम् ।
शौचादिना यथा शास्त्रं दोषापनयनं स्मृतम् ॥३६॥
अप्रामाण्यादनर्थत्वादशक्यत्वाच्च सर्वदा ।
पुरुषार्थानुरोधित्वान्नादर्तव्या मुमुक्षुभिः ॥३७॥
पुनर्जन्मकरीत्वाच्च न तेषु रमते बुधः ।
ज्ञाननिष्ठाविरोधित्वाद्विवेकिनां हेयः सदा ॥३८॥

वासना त्रिविधा बाह्या विषयजा विनिश्चिता ।
अभ्यन्तरे स्पृहारूपा मानसी वासना स्मृता ॥३९॥
कामक्रोधातिलोभाद्या सर्वानर्थप्रसूः स्मृताः ।
संकल्पवर्जनात्कामं क्रोधं कामविवर्जनात् ॥४०॥
दम्भं गुरुप्रसादेन लोभं त्यजेद्विचारणात् ।
परा सूता स्पृहा लोभादभ्यासाच्च प्रवर्तते ॥४१॥
दयया सर्वभूतानां निर्वेदात्सा निवर्तते ।
सत्यत्यागाद्धि मात्सर्यमहितानां च सेवया ॥४२॥
एतत्तु चीयते सम्यक्साधूनामुपसेवया ।
कुलाज्ज्ञानात् तथैश्वर्यान्मदो भवति देहिनाम् ॥४३॥
तेषु नश्वरतां ध्यात्वा सद्य एव विमुच्यते ।
इति कर्तुं न शक्या ये बलस्थायाऽपकारिणे ॥४४॥
असूया जायते तीव्रा कारुण्याद्विनिवर्तते ।
कृपणान्सततं वीक्ष्य ततः संजायते कृपा ॥४५॥
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ।
अज्ञानप्रभवो लोभो भोग-ध्यानाद्विवर्धते ॥४६॥
अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्तते ।
श्रेष्ठेषु मोदितां कुर्या न्मैत्रीं समेषु पालयेत् ॥४७॥
उपेक्षां दुर्जने कुर्याद् दुःखिषु करुणां चरेत् ।
सुखिषु मित्रभावेन तस्माद् द्वेषो निवर्तते ॥४८॥

स्वस्य राज्यनिवृत्त्यापि पुत्रादि राज्यमेव हि ।
स्वकीयमिति विज्ञाय यथा राजा न शोचति ॥४६॥
मैत्री-भावं समाश्रित्य समेषु स्पर्शनं त्यजेत् ।
शुभाशुभाभ्यां मार्गाभ्यां वहति वासनासरित् ॥५०॥
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ।
अभ्यासेन विचारेण वासना खलु बाधते ॥५१॥
विचारे हीनयत्नानां प्राणायामो विधीयते ।
द्वे बीजे चित्तवृत्तस्य प्राणस्पन्दनवासने ॥५२॥
एकस्मिन्नेतयोः क्षीणे क्षिप्रं द्वेऽपि नश्यतः ।

॥ इति तृतीयोच्छ्वासः ॥ ३ ॥



# चतुर्थोल्लासः

## योगफलानि

अङ्कुशेन विना मत्तो यथा दुष्टकरी क्वचित् ।
न शक्यते मनो जेतुं तथा युक्तिं विना क्वचित् ॥ १ ॥

आध्यात्मशास्त्रसंबोधात्साधु वैराग्यसेवया ।
वासनापरित्यागेन प्राणायामबलेन वा ॥ २ ॥

जयेच्चित्तं दुराधर्षं युक्तिभिः प्रागुदाहृतैः ।
स्वाधिकारानुसारेण गुरुणा संप्रयोजितः ॥ ३ ॥

यथा गोलकरोधेन ज्ञानेन्द्रियं निरोधति ।
तथैव ये मनो रोद्धुं यतन्ते हठपूर्वकम् ॥ ४ ॥

तेषां यत्नो भवेद् व्यर्थोऽशक्यत्वाद्वायुरोधवत् ।
हृदयकमलं यस्मात्तस्य गोलक उच्यते ॥ ५ ॥

प्रतीच्येकरसे शुद्धे अध्यस्था प्रकृतिः स्थिता ।
सा चाहंकाररूपेण सामान्येन प्रकाशिता ॥ ६ ॥

महत्तत्वमिति ख्याता ब्रह्मा नाम्ना प्रकाशते ।
ततो बहिर्विशेषेण साहंकारेण राजते ॥ ७ ॥

ततो बहिर्मनोरूपं ततो वागादिना बहिः ।
कार्यकारणरूपेण सर्वत्र सा विजृम्भते ॥ ८ ॥

गवादिष्विव वाङ्रोधः प्रथमा भूमिरुच्यते ।
निर्मनस्त्वं यथा बालो द्वितीया परिकीर्तिता ॥ ९ ॥

अहंकारं विना शान्ता तृतीया क्षीणसुप्तवत् ।
महत्तत्त्वं परित्यज्य सुषुप्ताविव तुर्यगा ॥१०॥

ननु शान्तात्मनि स्थैर्ये वृत्तिरहितहेतुना ।
सुषुप्तिवददर्शनं चित्तस्य न भवेत्कथम् ॥११॥

नहि स्वतः प्रसिद्धस्य दर्शनस्य निवारणे ।
प्रथते कोऽपि लोकेऽस्मिन्वस्त्रेण पावको यथा ॥१२॥

आत्माकारो हि चित्तस्य स्वभावो जायते यतः ।
अनात्माकारता पश्चात् प्रयत्नेन प्रपद्यते ॥१३॥

अनात्माकारमुज्झित्य यदात्मनि प्रतिष्ठते ।
तद्भावेन समा स्थितिर्न केनापि निरुध्यते ॥१४॥

यथाहि निर्मितः कुम्भो वियता खलु पूर्यते ।
तण्डुलादिप्रपूर्तिस्तु पश्चात्पुरुषयत्नतः ॥१५॥

तण्डुलपरिहारे ऽपि वियद्वस्तु न हीयते ।
तथा चित्तं समुत्पन्नं चैतन्येन प्रपूर्यते ॥१६॥

सुखदुःखादिसम्बन्धः पुरुषार्थेन जायते ।
दुःखाद्यनात्मभावं तु स्वात्मनि परिकल्प्यते ॥१७॥

विवेकाभ्यासदार्ढ्येन प्रकर्षेण निवारिते ।
निर्निमित्तश्चिदाकारो वद केन निवार्यते ॥१८॥
ततो निरोधयत्नेन निवृत्तिकेन चेतसा ।
संस्कारमात्रशषेत्वादतिसूक्ष्मेण वा पुनः ॥१९॥
मुख्या वृत्तिर्विनाऽपि स्याच्चिदात्ममात्रचिन्मयम् ।
आत्मानुभूयते स्वेन नात्र कार्या विचारणा ॥२०॥
आत्मानुभवतः पश्चाद् भूमिकारोहणे मुनिः ।
सततं यत्नमातिष्ठेद्यावद्देहो न नश्यति ॥२१॥
कृतकृत्योस्मि नैवास्ति कर्तव्यं योऽभिमन्यते ।
निश्चितं नागता तस्य योगभूमिः सुखप्रदा ॥२२॥
योगभूमेर्न वै सीमा सुखस्यापि तथैव च ।
ऊर्ध्वभूमिषु चानन्दो लभ्यते शतशः क्रमात् ॥२३॥
न जाग्रन्न च वै सुप्तिः स्मृतिविस्मृतिवर्जितम् ।
नास्तमेति न चोदेति यस्यासौ मुक्त एव सः ॥२४॥
स्वस्थो जाग्रदवस्थायां सुप्तवद्योऽवतिष्ठते ।
निश्वासोच्छ्वासहीनश्च निश्चितं मुक्त एव सः ॥२५॥
भोगेच्छा यस्य नैवास्ति तपसा क्षीणकल्मषः ।
ईप्सितानीप्सिते न स्तः स योगी मुक्त एव हि ॥२६॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
रागद्वेषविनिर्मुक्तः स योगी मुक्त उच्यते ॥२७॥

न प्रत्यग्ब्रह्मणो भेदं तथैव ब्रह्मसर्गयोः ।
प्रज्ञया यो न जानाति स योगी मुक्त एव हि ॥२८॥
सर्वत्रविगतस्नेहो यो न वाञ्छति किंचन ।
निरिच्छुर्वर्तते कार्ये साक्षिवदवतिष्ठते ॥२९॥
यस्य नास्ति कृतेनार्थो नाकृतेनेह किंचन ।
सुषुप्तवत्स्थितिर्यस्य स योगी मुक्त एव हि ॥३०॥
योगेन प्राप्यते योगो नायोगी योगमश्नुते ।
योगेन योगलाभस्तु न शास्त्रेण श्रुतेन वा ॥३१॥
अयोगी सर्वशास्त्रज्ञो न योगफलमश्नुते ।
इन्द्रियाणि वशीकृत्य योगो भवति नान्यथा ॥३२॥
मन्त्रौषधिक्रियोत्पन्नाः सिद्धयो बहुधा स्मृताः ।
प्रज्ञायोगेन ताः सन्ति वासना-जन्म-वर्धिकाः ॥३३॥
प्रज्ञायोगे तु या सिद्धिः सा तासु नैव विद्यते ।
दुःखहानिरभीतिश्च नित्या शान्तिर्निरङ्कुशा ॥३४॥
चित्तप्रसन्नता स्थैर्यमारोग्यं दम एव च ।
नाश अशोकं मोहदार्सश्च प्रज्ञायोगादवाप्यते ॥
अनादाविह संसारे संचिता कर्मकोटयः ।
अनेन विलयं यान्ति शुद्धे धर्मो विवर्धते ॥३५॥
अमुना वासनाजाले निःशेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥३६॥

वाक्यमप्रतिबद्धं सत्याक्परोक्षावभासिते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥३७॥
समाधिनिर्धूतमलस्यचेतसो ।
निवेशितस्यात्मनि यत्सुखं लभेत् ॥
न शक्यते वर्णयितुं गिरा तदा ।
स्वयंतदन्तःकरणेन गृह्यते ॥
इति वक्ति श्रुतिः साक्षादनुभूतिरिहास्ति वै ।
स्वयं कृत्वा लभे शान्तिं योगिनामस्तु मुक्तिदः ॥३८॥

इति साधु प्रज्ञानाथकृते—प्रज्ञायोगे चतुर्थोच्छ्वासः ॥ ४ ॥

---

## प्रज्ञायोगे गीतावाक्यानि ॥

( द्वितीयेऽध्याये )

बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥४८॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

कर्मजं बुद्धियुक्तो हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥
प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥
य सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥
यदा संहरते चायं कूर्मो ऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥
स्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

( पंचमेऽध्याये )

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥१९॥

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥२०॥
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥

( षष्ठेऽध्याये )

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥
युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२५॥

शुचीनां श्रीमतां गेहे योगभ्रष्टो ऽभिजायते ॥४१॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ॥४३॥
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥२०॥१०॥

( अष्टादशेऽध्याये )

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते ॥१७॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥४६॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयाँस्त्यक्त्वा रागद्वेषौ व्युदस्य च॥५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५७॥

सिद्धांतः

उपक्रमादिषड्लिंगैर्गीतायां यद्विचारितम् ।
बुद्धियोगो महावक्त्रा पार्थाय प्रतिबोधितः ।
शोकमोहविनाशाय तत्त्वज्ञानमुदीरितम् ।
तत्त्वज्ञाने ऽसमर्थाय प्रज्ञायोगे प्रयोजितः ॥

बुद्धियोगं समाकर्ण्य पार्थो ब्रूते रमापतिम् ।
स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥

प्रज्ञायोगो न चेदत्र भगवद्विषयः खलु ।
अर्जुनस्य भवेत्प्रश्नश्चाकाण्डे ताण्डवं यथा ॥

अबुद्ध्वा चेदयं प्रश्नो भगवानपि वारयन् ।
प्रत्युत्तरमथान्यत्र ब्रूयात्पार्थप्रबोधये ॥

यतो नासौ कृतो यत्नस्तथैव सर्ववित्प्रभुः ।
तेनानुमीयते प्रज्ञा भगवतापि साश्रिता ॥

प्रथमे बुद्धियोगस्य फलं प्रोक्तं समासतः ।
कर्मोपासनया साद्धं मुपायं च तदन्तरम् ॥

उपायो विविधः प्रोक्तो यथाधिकारभेदतः ।
निर्विण्णानां तथा ज्ञानं कर्म च फलकांक्षिणाम् ॥

न निर्विण्णे न चासक्ते भक्तियोगः प्रशस्यते ।
पूर्वाभ्यासेन केषांचिदधिकारोऽन्यथाऽन्यथा ॥

ये यथा तं प्रपद्यन्ते तांस्तथैव भजत्ययम् ।
संस्कारवशतः पुंसां विचित्रा जायते रुचिः ॥

अथवा ज्ञानयोगस्य साधने कृपणं प्रति ।
बुद्धियोगः सुसाध्यत्वाद् बुद्धिमता प्रशासितः ॥

सन्न्यासेऽनधिकाराात्तु क्षत्रियत्वात्तथाऽपि च ।
निष्कामकर्मयोगेन तस्य सिद्धिर्विधीयते ॥

स्वर्गारोहणं पार्थानां श्रूयते भारते यतः ।
नज्ञानफलभाक्कश्चित् तत्स्थानमधिगच्छति ॥
अधिकारं फलं चैव सम्यग् दृष्ट्या विचारिते ।
आद्यन्ते बुद्धियोगस्य वर्णनाच्च प्रतीयते ॥
प्रज्ञायोगो रमापत्या पार्थाय प्रतिबोधितः ।
न कर्मभक्तिरन्यद्वा ऽस्माभिरनुमीयते ॥
प्रत्यध्यायसमाप्तौ च योगशास्त्रे पुनः पुनः ।
व्यासेन प्रोच्यते यस्माद्योगो हि परमा गतिः ॥
विषादोऽपि यतो योगस्तत्रैव परिकीर्तितः ।
बुद्धियोगं विना योगो नान्यः कश्चिद् भवेत्खलु ॥
इति विज्ञाय मेधावी गीताशास्त्रे विचक्षणः ।
प्रज्ञायोगे तु तात्पर्यं मननेन विचिन्तयेत् ॥
संस्कारप्रभावाद्धि मतिर्भिन्ना मनीषिणाम् ।
यथाभिमतमास्थाय प्रकुर्वन्तु स्वसाधनम् ॥
वयं तु शास्त्रयुक्तिभ्यां स्वानुभूत्या विशेषतः ।
प्रज्ञायोगं प्रपश्यामो गीताशास्त्रे विचारतः ॥
श्रुत्यर्थं च सुविज्ञाय प्रज्ञायोगं विधाय च ।
ज्ञानाच्छान्तिर्भवेच्छीघ्रं श्रद्धाभक्तिसमन्विते ॥

ॐ तत्सत् ॥

इति प्रज्ञायोगः समाप्तः ॥

॥ ॐ ॥

# प्रज्ञास्तुतिः

प्रज्ञानन्दननन्दिनी शुभकरी प्रज्ञा सुधावर्षिणी ।
प्रज्ञा विज्ञहितैषिणी बलवती विज्ञानरत्नाकरी ॥
मोहाज्ञानविनाशनेऽतिकुशला दुःखौघविध्वंसिनी ।
प्रज्ञे प्राज्ञवरे ! विधेहि करुणां त्वत्पादकंजं श्रये ॥ १ ॥
प्रज्ञा मोक्षविधायिनी हि भगवद्गीतार्थसम्बोधिनी ।
प्रज्ञायोगकरी तथा हितकरी क्षेमंकरी शंकरी ॥
प्रज्ञा ज्ञानवती सदादरवती प्रज्ञाभवद्वेषिणी ।
प्रज्ञे प्राज्ञवरे ! विधेहि करुणां त्वत्पादकंजं श्रये ॥२॥
प्रज्ञाया करुणाप्रसादकणतो रंकः श्रियं प्राप्नुयात् ।
प्रज्ञामंडनमंडिनी शिवकरी प्रज्ञा शिवारूपिणी ॥
प्रज्ञा ध्यानपरायणस्य नितरांबुद्धिर्न संचेष्टते ।
प्रज्ञे प्राज्ञवरे ! विधेहि करुणां त्वत्पादकंजं श्रये ॥३॥

---

## मंगलाचरणम् ॥

यस्यश्रीचरणारविन्दभजनाद् देवा द्युतिं प्राप्नुवन् ।
ध्यानाद्यस्य च शक्यते हि मनुजैर्लब्धुं विमुक्तेः पदम् ॥
वेदज्ञैश्च सदोंहरीति सततं मन्त्रैश्च यो गीयते ।
प्रज्ञानाथहरिप्रियेण बहुशः श्रीशो हरिः स्तूयते ॥ १ ॥
पुत्रो यस्य गणेशनामकथितो विघ्नार्तिविध्वंसकः ।
जाया चैव महेश्वरी त्रिजगतां माता जगत्तारिणी ।
गंगा यस्य विराजते सुललिते भाले शिवो ऽसौ मया ॥
प्रज्ञानाथशिवप्रियेण सततं श्रीशंकरो ऽभ्यर्च्यते ॥२॥
येषां श्रीमुखनिस्सृतं कलिमलप्रध्वंसि सारस्वतम् ।
शिष्याणां सुखबोधनाय वितनोत्यानन्ददं चामृतम् ॥
तान् ध्यात्वा विबुधान्सुसौम्यवपुषो गम्भीरनाथान्गुरून् ।
प्रज्ञानाथगुरुप्रियः प्रणमति श्रीशम्भुरूपान्हरीन् ॥ ३॥

ॐ तत्सत् ॥

---

